# ॥अथ श्रीसामवेद शांतिचिंतामणी प्रारंभः॥

प्रकाशक—रमणीकलाल सुंदरलाल भट्ट. (ईनामदार)



सुंदरलाल गोविंदलाल भट्ट.

( इनामदार. )



स्व. वे. शा. सं. पूज्यपाद
शास्त्रीजी रामकृष्ण हर्षजी.

( महा महोपाध्याय. )



संपादकः

**अग्निहोत्रीः गणपतिशंकर भवानिशंकर**

मु. बरकाल.

## ॥ अथसामवेदशांतिचिंतामणी विषयानुक्रमणिका प्रारंभः ॥

# ॥ अथ शांतिचिंतामणिप्रारंभः ॥

॥ श्रीगणेशायनमः ॥ श्रीभवानीशंकराभ्यांनमः ॥ ॥ प्रणम्यतातंविश्रामंविघ्नेशंजगदंबिकां ॥ शांतिचिंतामणिंवक्ष्येसामगानांहितायवै ॥१॥ तत्रादौसर्वशांतीनांप्रकृतिस्तावदुच्यते॥ ग्रहशांतिर्गोभिलोक्तापुराणश्रुतिसंमतां ॥ २ ॥ अथग्रंथारंभादौआदित्यादिग्रहाणांमहत्वंसूचयन्नाह ॥ ॥ देवदानवगंधर्वाःपिशाचोरगराक्षसाः ॥ पीड्यंतेग्रहपीडाभिःकिंपुनर्भुविमानुषाः ॥ देवाःइंद्रादिदानवाः हिरण्यकशिपुप्रभृतयः ॥ गंधर्वाः विश्वावस्वादयः पिशाचाः कुणपादयः ॥ उरसागच्छतितेउरगाः।वासुकिप्रभृतयः । एतेद्रूस्थानस्थितग्रहपीडाभिःपीड्यंतेतर्हिपृथिव्याअल्पसाममनुष्याःकिंनपीड्यंते । अपितुपीड्यंतएव । ग्रहपीडायामितिपाठेसत्यामितिव्याख्येयं ॥ दुस्थौआदित्यादिअनुष्ठानं। तस्मात्काम्यनुज्योतिर्विदादिष्टेशुभेह्निकर्त्तव्यः ॥ काम्येग्रहयज्ञेमंडपकुंडादियथोक्तमेवसर्वंकार्यं ॥ ॥ अथकर्मक्रमः ।. तत्रादौप्राङ्मुखोवाउपविश्यश्मश्रुकर्मकारयेत् । ततस्तिलामलकादिनामलापकर्षणस्नानं ॥ ततआचमनं॥ अहतवस्त्रद्वयधारणं ॥ शिखाबंधनंमंत्रेण ॥ कर्मांगाचमनं ॥ ततप्राणायामः ॥ ततःकर्मणःप्रधानसंकल्पः यथा ॥ गुरुंगणपतिंनत्वाताम्रपात्रेकुशाक्षतजलानिकृत्वा दक्षिणहस्तेजलमादायदेशकालौस्मृत्वा उत्तरायनसंक्रांतिमहापर्वणि एवंदक्षिणायनविषुवतिसूर्योपराग चंद्रोपरागएवमादीनिसंकीर्त्य महापर्वनिमित्तंआदित्यादिग्रहाणांप्रीत्यर्थं गोभिलोक्तग्रहयज्ञेनाहंयक्ष्ये । नैमित्तकेतुममसुतस्यवासुतायाः विवाहनिमित्तंइतिविवाहे । सुतस्यउपनयनेपिकर्मनिमित्तंइत्युपनयने ॥ एवंअन्नप्राशनचूडाकरणाद्युक्त्वाआदित्यादीनामित्यादिवदेत ॥ काम्येतुममशरीरेअमुकस्यवाउत्पन्नरोगनिवृत्तिकामोहं । अथवाधनावाप्तपुत्रावाप्तये आदित्यादीनामित्यादि ॥ तदनंतरमादौगणपतिपूजा ॥ तत्रदेशकालौसंकीर्त्य ग्रहयज्ञकर्मांगत्वेनतस्यचनिर्विघ्नपरिसमाप्त्यर्थेगणपतिपूजामहंकरिष्ये ॥ इतिसंकल्प्य । सुपीठेरक्तवस्त्रमास्तीर्यतदुपरितंडुलैश्चंदनेनवा अष्टदलंकृत्वाकर्णिकायांप्रतिमाक्षतपुंजंवानिधायतत्रगणपतिमावाहयेत् ॥ आतुनइतिगौरीवितिर्गायत्रीगणपतिः । आवाहनेविनि-

योगः ॥ सामपठित्वागणपतेइहागछइत्यावाह्यइहतिष्ठेसंस्थाप्यउपचारान्कुर्यात् ॥ तत्पुरुषायविद्महेवक्रतुंडायधीमहि तन्नोदंतीप्रचोदयात् ॥ इतिगणपतिर्गायत्रीमुच्चार्यगणपतयेआसनंसमर्पयामि ॥ एवंपाद्यं । अर्घ्यं । आचमनीयं । स्नानं । पुनराचमनीयं । वस्त्रं । पुनराचमनीयं । उपवीतं । गंधंपुष्पं । धूपं । दीपं । नैवेद्यं । पुनराचमनीयं । नमस्कारैः । प्रदक्षिणा । समाचारांनालिकेरादिभिरर्घ्यं ॥ उपचारानिमांस्तुभ्यंददामिपरमेश्वर ॥ भक्त्यागृहाणदेवेशत्वामहंशरणं गतः ॥ इतिपुष्पांजलिदानेनउपचारान्समर्प्यबद्धांजलिः ॥ वक्रतुंडमहाकायसूर्यकोटिसमप्रभ ॥ अविघ्नंकुरुमेदेवसर्व कार्येषुसर्वदा इतिसंप्रार्थ्यादेवपूजितोसिक्षमस्वइतिविसर्जयेत् ॥ ॥ इतिगणपतिपूजाप्रयोगः ॥ ततोमातृपूजा ॥ तत्रदेशकालौसंकीर्त्त्यग्रहयज्ञांगत्वेनविहितं गौर्यादिचतुर्दशमातृणांवसोर्द्धारासहितानां पूजामहंकरिष्ये ॥ इतिसंकल्प्य । यथाविधिनापूजांविधाय आयुःशांतिजपेत् ॥ ततोवैश्वदेवः । तदनंतरंवृद्धिश्राद्धं ॥ तत्रदेशकालौसंकीर्त्त्य तिथौ गोत्राणांइत्याद्युक्त्वापित्रादीनां मातामहादीनांनामोक्त्वाएषां अद्यग्रहयज्ञांगत्वेनविहितं नांदीश्राद्धं द्विपार्वणंविश्वेदेवापूर्वकं मर्घपिंडंसहितंयुष्मदनुज्ञया अहंकरिष्यइतिसंकल्प्य यथाविधिनावृद्धिश्राद्धंकुर्यात् तदनंतरंमृत्विग्वरणं ॥ ॥ तत्रप्रागग्र मुदग्रमेवमासनद्वयंनिधाय समाचारात्प्रृतसंपुटेअर्घंकुर्यात् । तस्मिन्पुष्पाक्षतदध्युदकानिकृत्वा सजातीयपात्रांतरेण पिधायसूत्रेणसंवेष्ट्यास्त्रासनात्पश्चिमतऊर्ध्वस्थितस्य यजमानस्यहस्तेतदर्घंदत्वा सोमसामादिपठित्वासुमुखश्चैकदंतश्चेत्या दिपठित्वा देशकालौसंकीर्त्त्यमम आयुरारोग्यपुत्रादिसुखश्रीप्राप्तयेमम ॥ आपद्विघ्नभयारीष्टशत्रुबुद्धिक्षयाय ॥ विशेष काम्यहोमेनसहितंसमिदादिभिः ॥ आदित्यादिग्रहयज्ञंकर्तुंयूयम्प्रसीदत ॥ स्वागतंयोद्विजश्रेष्टामदनुग्रहकारकाः ॥ इदमर्घ्यमिदंपाद्यंभवद्भिप्रतिगृह्यतां ॥ ॥ इतिपठित्वाब्राह्मणानामग्रेतदर्घंस्थापयेत् ॥ ततःस्वयमुदङ्मुखउपविश्यप्राङ्मुख माचार्यमुपवेश्य अक्षतानादायतस्य दक्षिणंजान्वालभ्यअमुकगोत्रं अमुकप्रवरंसामवेदस्यकौथुमीशाखाध्यायिनं अमुक शर्माणंगोभिलोक्तग्रहयज्ञेनाहंयक्ष्येतत्रत्वामहमाचार्यंवृणे । वृत्तिस्मितितेनवाच्यं ॥ ॥ आचार्यएतत्तेपाद्यंपादावनेजनं । एतद्वोर्घ्यं । इदंपादप्रक्षालनं । इदमत्रचंदनंपुष्पं । एवमाचार्यमादौवृत्वाब्राह्मणंवृणुयात् ॥ उदङ्मुखंब्राह्मणमुपवेश्य



स्वयंप्राङ्मुखउपविश्यसयवहस्तो दक्षिणंजान्वालभ्यगोत्राद्युच्चार्यत्वामहंब्रह्माणंवृणेइतिपाद्यादिपूर्ववत् । ततएव वो पविष्टअन्यान्वृणुयात् ॥ आचार्यादीनसर्वान्प्राङ्मुखोवृणुयात् इतिबह्वृचः । गोत्राद्याभाष्यत्वामहंमृत्विजंवृणे । पूजादि पूर्ववत् । एवमृत्विजान्वृत्वाद्विजपादप्रक्षालनोदकेनसहस्वपादप्रक्षालनोदकसंसर्गमकुर्वन्स्वपादौप्रक्षाल्याचामेत् । अत्र शक्तेनप्रतिगृहंद्वौद्वौवृत्विजौकर्त्तव्यौएकंवा । ब्रह्माआचार्यश्चएवमाद्यपक्षेसमुदायेनविंशति । द्वितीयपक्षेएकादशअशक्ते नद्वावृषिजौब्रह्माआचार्यश्चेत्पेवंकार्यौ।एवंसमुदायेनचत्वारोभवंति। अत्यंताशक्तेनब्रह्माआचार्यश्चेतिद्वावेवकर्त्तव्यौ। ततः स्वयंप्राङ्मुखउपविश्यपत्नीस्वदक्षिणोसमुपवेश्य आचम्यप्राणानायम्यसुपात्रेजलंकृत्वा चंदनंपुष्पाक्षतादिनिक्षिप्यगाय- त्र्यादिमंत्रैस्तज्जलमभिमंत्र्यकुशाग्रगृहीतजलेन ब्राह्मणपूजोपहारान्संप्रोक्ष्य आचांर्यादिवृतानांपूजोपहाराणांपवित्रतास्तु अस्त्वितिसर्वैः । देशकाल०तिथौवरणांगतयाविहितमाचार्यादीनांपूजनमहंकरिष्ये इतिसंकल्प्यपूजयेत् । आचार्याय इदमासनं । ब्रह्मणेइदमासनं । रित्विजेइदमासनं । एवंपर्वेभ्यआसनानिदत्वा दत्तान्यासनानिरुत्विग्भ्योहंसंप्रददेनमम । ततश्चंदनपुष्पादिभिःसंपूज्यसंकल्पंकुर्यात् । दत्तंगांधर्वगंधवानस्पत्यानिपुष्पाणिवृतेभ्योब्राह्मणेभ्योहंसंप्रददेनमम ॥ ततः प्रतिरुत्विजंवासोयुगंदत्वावाहंस्त्यंवासोयुगं आचार्यायतुभ्यमहंसंप्रददेनमम ॥ एवमन्येभ्यश्चाततःवृतानांब्राह्मणाना मर्चनविधेःपरिपूर्णमस्तु ॥ ततःसमाचारातदाचम्यभोजनसंकल्पंकुर्यात् । यथासंपन्नं । भोजनमाचार्यादिभ्योहंसंप्रदास्ये । ततःसुसंप्रोक्षितमस्त्वित्यादि । ततोदक्षिणासंकल्पंकुर्यात् । सकुशोदकमादायवरणार्चनसमृध्यर्थंदक्षिणां आचार्यादिभ्योहं संप्रददेनमम । वृतानांब्राह्मणानामर्चनविधेःपरिपूर्णमस्तु ॥ ततःस्वस्तिवाचनं ॥ ॥ अथआचम्यप्राणायामायम्य देशकालौसंकीर्त्त्यसर्वाभीष्टसिध्यर्थं ग्रहशांतिकर्मणोगतयाविहितंपुण्याहवाचनमहंकरिष्य इतिसंकल्प्य स्वपुरतोदक्षिणो त्तरंतंडुलपुंजौकृत्वा तदुपरिउदकसंस्थंकलशद्वयंस्थापयेत् ॥ भूमिर्भूमिरितिइंद्रऋषिः । यजुश्छंदः । भूम्यादयोदेवताः । भूम्यभिमंत्रणोविनियोगः ॥ भूमिस्पृष्ट्वाभूमिरितिसामपठेत् । एवमुत्तरेपि । आविशन्नितिउशनागायत्रीसोमः । कलश स्थापनेविनियोगः । सामपठित्वाकलशंस्थापयेत् ॥ समन्यायंतीत्पापस्त्रिष्टुबायः । जलपूरणेविनियोगः ॥ द्वाउ ३ ।

ऐरयत् ।३॥ त्वमिमाअ्पधोरितिसोमस्त्रिपुशोमः । औषधीमक्षेपेवि०॥ हाउ३। हौवा३। चंद्रमाअप्स्वेरेतित्रितः पंङिरिंद्रः। हिरण्यमक्षेपेवि० । इदंवसोइतिगरोगायत्रींद्रः। वस्त्रवेष्टनेवि० । सधातुमितिलुशः । पंङ्-रिंद्रः । पूर्णपात्रनिधानेविनि-योगः । अयमूर्जेतिप्रजापतपनुष्टुवरः । फलनिधाने०। ततोत्तरकलशेवारुणमंत्रेणवरुणमावाहयेत् ॥ यदाकदेतियज्जो बृहतीवरुणः । बरुणावाहने०। साम्नावरुणमावाह्यप्रतिष्ठामंत्रौपठित्वाअस्मिनकलशेवरुणसुप्रतिष्ठितोभवतु । वतोवरुण स्वमंत्रेणसंपूज्यकलशेदेवताआवाहयेत् ॥ अक्षतान्हस्तेआदायकृतांजलिःपठेत्। कलशस्यमुखेविष्णुः कंठेरुद्रःसमाश्रितः मूलेतस्यस्थितोब्रह्मामध्येमातृगणाःन्मृताः । कुक्षौतुसागएःसप्तसप्तद्वीपावसुंधराः ॥ ऋग्वेदोथयजुर्वेदः सामवेदोस्वथ-र्वणः । अंगैश्चसहितासर्वेकलशंतुसमाश्रिताः । शांतिःपुष्टिश्चगायत्रीसावित्रीचसरस्वती ॥ सर्वेसमुद्राःसरितःसरांसिचन दानिच । आयातुममशांत्यर्थंदुरितक्षपकारकाः ॥ ततःकलशेअक्षतान्क्षिपेत् । ततस्तदक्षिणतःप्रश्नप्रतिवचनसमर्थास्त द्दिवसेश्राद्धादिष्वभुक्तवंतोनिषिद्ध प्रतिग्रहनिवृत्तांछुचींत्सोतरीयान दर्भपवित्रपाणीयुग्मान्ब्राह्मणानुदङ्मुखान्प्राङ्मुखा न्वा। आसनेउपवेश्यगंधपुष्पादिभिरभ्यर्च्य गणपतिगुर्वादीन्नत्वा दक्षिणकलशंहस्ताभ्यांमादाय आशिषःप्रार्थ्ययेत् । अवनिकृतजानुमंडलंकमलमुकुलसदृशमंजलिं शिरस्याधारयदक्षिणेनपाणिनासुवर्णपूर्णकलशंधारयित्वा । दीर्घानागान द्योगिरयस्त्रीणिविष्णुपदानिच तेनायुःप्रमाणेनपुण्याहंदीर्घमायुरस्तु । अस्तुइतिद्विजाः । शिवाआपःसंतु । सौमनस्य मस्तु । अक्षतंचारिष्टंचास्तु । गंधाःपांतु । मांगल्यंचास्तु । अक्षताःपांतु । आयुष्यमस्तु । पुष्पाणिपांतु । सौश्रियमस्तु। तांबूलानिपांतु। ऐश्वर्यमस्तु । दक्षिणाःपांतु । वहुदेयंचास्तु । दीर्घमायुःशांतिःपुष्टिस्तुष्टिश्रीर्यशोविद्याविनयोवित्तबहु पत्रंबहुधनंचायुष्यंचास्तु । अत्रसर्वत्रब्राह्मणैरस्तु पातुसंतुइत्यादिप्रत्युत्तरदेयं । यंकृत्वासर्ववेदयज्ञक्रियाकरणकर्मारंभाः शुभाःशोभनाःप्रवर्त्तते। तमहपोंकारमादिकृत्वा ऋग्यजुः सामाशीर्वचनंबहुरूषिमतंसंविज्ञातं भवद्भिरनुज्ञातं पुण्यंपुण्याहं वाचयिष्ये । वाच्यतामितिप्रत्युक्तिः। एवमुत्तरत्रापिप्रत्युत्तरंयथायोग्यं। द्रविणोदाद्रविणसस्तुरस्य द्रविणोदाःसमनरस्य प्रयंसत् । द्रविणोदावीरवतीमिषुन्नो द्रविणोदारासतेदीर्घमायुः ॥ देवो३ वो३ द्रविणोदाःसवितापश्चातासवितापुरस्ता



त्सवितोत्तरातात्सविताधरातात् । सवितानःसुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः । उर्ध्वऊषुणा३ ऊता२३४ यायि ॥ नवोनवोभवति जायमानोह्नांकेतुरुषसामेत्यग्र भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतेदीर्घमायुः ॥ चंद्रमा आउवा ॥ उच्चादिविदक्षिणावंतोअस्थुर्ये अश्वदाःसहतेसूर्येण ॥ हिरण्यदाअमृतत्वंभजंतेव।सोदाः सोमप्रतिरंतआयुः ॥ उच्चाता३ यिजातमंधसः ॥ इत्येतारुचःपुण्याहेब्रूयात् । व्रतनियमतपस्स्वाध्यायक्रतुदमदानवशिष्टानांसर्वेषांब्राह्मणानां मनःसमाधीयतासमाहितमनसस्स्मः । इतिब्राह्मणः। प्रसीदंतुभवंतः। सुप्रसन्नास्म। इतिद्विजाः। शांतिरस्तु। पुष्टिरस्तु। तुष्टिरस्तु । वृद्धिरस्तु। अविघ्नमस्तु। आयुष्यमस्तु। आरोग्यमस्तु। शिवंकर्मास्तु। कर्मसमृद्धिरस्तु । वेदसमृद्धिरस्तु। शास्त्रसमृद्धिरस्तु। पुत्रसमृद्धिरस्तु । धनधान्यसमृद्धिरस्तु । इष्टसंपदस्तु । अनिष्टनिरसनमस्तु। यत्पापंतत्प्रतिहतमस्तु। यच्छ्रेयस्तदस्तु । उत्तरेकर्मण्यविघ्नमस्तु । उत्तरोत्तरमहरहरभिवृद्धिरस्तु । अत्रसर्वत्रअस्तुइतिप्रत्युक्तिः। उत्तरोत्तराः क्रियाःशुभाःशोभनाःसंपद्यतां। संपद्यतांइतिप्रत्युक्तिः। तिथिकरणमुहूर्तनक्षत्रसंपदस्तु। तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधि देवताःप्रीयंतां । तिथिकरणेमुहूर्तेनक्षत्रेसग्रहेसदैवतेप्रीयेतां । अग्निपुरोगाविश्वेदेवाःप्रीयंतां। इंद्रपुरोगामरुद्गणाःप्रीयंतां। ब्रह्मापुरोगाःसर्ववेदाप्रीयंतां । माहेश्वरीपुरोगाउमामातरःप्रीयंतां । वसिष्ठपुरोगारूषिगणाःप्रीयंतां । अरुंधतीपुरोगा एकपत्न्यःप्रीयंतां । रुषयछंदांस्याचार्यवेदयज्ञाश्चप्रीयंतां । ब्रह्मचब्राह्मणाश्चप्रीयंतां । श्रीसरस्वत्यौप्रीयेतां । श्रद्धामेधे प्रीयेतां । भगवतीकात्यायनीप्रीयतां । भगवतीमाहेश्वरीप्रीयतां । भगवतीपुष्टिकरीप्रीयतां । भगवतीतुष्टिकरीप्रीयतां। भगवतीऋद्धिकरीप्रीयतां । भगवतीवृद्धिकरीप्रीयतां । भगवंतौविघ्नविनायकौप्रीयेतां । भगवान्स्वामीमहासेनःसपुत्रः सपार्षदःसर्वस्थानगतःप्रीयतां । हरिहरहिरण्यगर्भाश्चप्रीयंतां । सर्वाग्रामदेवताःप्रीयंतां । सर्वाःकुलदेवताःप्रीयंतां । हताश्चब्रह्मद्विषः। हताइतिप्रत्युक्तिः । हताःपरिपंथिनः। हतास्तेपरिपंथिनइतिप्रत्युक्तिः । हताअस्यकर्मणोविघ्ना कर्त्तारः। शत्रवःपराभवंयांतु । शाम्यंतुघोराणि । शाम्यंतुपापानि । शाम्यंत्वीतयः। अत्रतेइत्यध्याहृत्यचतुर्ष्वपिवाक्येषुप्रत्युक्तिः। हतास्तेअस्यकर्मणोविघ्नकर्त्तारइत्यादिनाशाम्यंतृतेघोराणिइतिच । शुभातिवर्द्धतां । शिवाआपसंतु । संतुतेशिवा

आपइत्येवमग्रेपिप्रत्युक्तिः । शिवाआहुतयसंतु । शिवाऔषधयःसंतु । शिवावनस्पतयःसंतु । शिवाअतिथयःसंतु । अहो
रात्रेशिवेस्यांतां । स्यातामहोरात्रेशिवेइतिप्रत्युक्ति ॥ निकामेनिकामेनः पर्जन्योवर्षतुफलवत्योनओषधयःपच्यंतां ॥
योगक्षेमोनःकल्पतां ॥ त्वष्टा ।३४। नेदैरियंवचाः ॥ शुक्रांगारकबुधबृहस्पति शनैश्चरराहुकेतुसोमसहिताआदित्य
पुरोगासर्वेग्रहाःप्रीयंतां । प्रीयंतामादित्यपुरोगासर्वेग्रहाइतिप्रत्युक्तिः । एवमग्रेप्येकवचनेन । भगवान्नारायणःप्रीयतां।
भगवान्पर्जन्यःप्रीयतां । भगवान्स्वामीमहासेनःप्रीयंतां । पुरोनुवाक्यायत्पुण्यंतदस्तु । आज्ययाय्त्पुण्यंतदस्तु । वषट्
कारेणयत्पुण्यंतदस्तु । प्रातःसूर्योदयेयत्पुण्यंतदस्तु ॥ अभिवादयामिसहशिष्यैः । आयुष्मानभवसहपुत्रैः। पुण्याहंकालो
वाचयिष्ये । वाच्यतां। ब्राह्मयंपुण्यंमहर्यच्चसृष्ट्युत्पादनकारकं । वेदवृक्षोद्भवंनित्यंतत्पुण्याहंब्रुवंतुनः । ब्राह्मणाःममास्मिन्
ग्रहशांतिकर्मणिपुण्याहंभवंतोब्रुवंतु । इतित्रिवाच्यं। पुण्याहंपुण्याहंपुण्याहं । इतिप्रत्युक्तिः। उद्गातेवंशकुनेसामगायसि
ब्रह्मपुत्रइवसवनेषुशांशसि । वृषेववाजीशिशुमतीरपीत्यासर्वतोनः शकुनेभद्रमावद । विश्वतोनःशकुनेपुण्यमावद ॥ पुनंतु
मादेवजनाः । पुनंतुमनसाधियः । पुनंतुविश्वाभूतानिजातवेदः। पुनीहिमा । पुनानःसोमा३ ॥ पृथिव्यामुद्धृतायांतु
यत्कल्याणंपुराकृतमृषिभिःसिद्धगंधर्वैस्तत्कल्याणब्रुवंतुनः । ब्राह्मणाःममास्मिन्ग्रहशांतिकर्मणि कल्याणंभवंतोब्रुवंतु
इतित्रिः । कल्याणं ।३॥ अपाःसोममस्तमिंद्रभियाहिकल्याणीर्जायासुरणंगृहेते । पत्रारथस्यवहतोनिधानंविमोचनं
वाजिनोदक्षिणावत्॥ जथेमांवाचंकल्याणीमावदानिजनेभ्यः। ब्रह्मराजन्याभ्यां शूद्रायचार्यायचस्वायचारणायच। प्रियो
देवानांदक्षिणायैदातुरिहभूयासमयंमेकामःसमृध्यतां ॥ काऽऽया ॥ सागरस्यतुयारुद्धिर्महालक्ष्म्यादिभिःकृता। संपूर्णा
सुप्रभावचतांरुद्धिंब्रुवंतु नः । ब्राह्मणाःममास्मिनग्रहशांतिकर्मणिरुद्धिंभवंतोब्रुवंतुइतित्रिः ॥ रुध्यंतां ३॥ रुध्यामस्तो
मंसनुयामवाजमानोमंत्रंसरथेहोपयातं । यशोनपक्वंमधुगोष्वंतवराभूतांऽशोअश्विनोःकाममप्राः । सत्रस्यरुद्धिरस्यगन्म
ज्योतिरमृताअभूमादिवंपृथिव्याअ । ध्यारुहामाविदामदेवांस्वर्ज्योतिः॥ औहोवा औहोवा औहो३वा॥ स्वस्तियाअवि
नाशाख्यापुण्यकल्याणवृद्धिदा । विनायकप्रियानित्यंतांस्वस्तिंब्रुवंतुनः । ब्राह्मणाःममास्मिनग्रहशांतिकर्मणिस्वस्ति





भवंतोब्रुवंतु३। स्वस्ति३। स्वस्तिद्धिप्रपथेश्रेष्ठारेक्णस्वत्यभियावाममेति ॥ सानोअमासोअरण्येनियातुस्वावेशाभवंतुदेव
गोपाः । स्वस्तिनइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्वदेवाः । स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥
त्रातारमिंद्र० ॥ ततःउत्तरकलशंदक्षिणाहस्तेदक्षिणाकलशवामहस्ते गृहीत्वाताभ्यांधाराद्वयंसततंपात्रेनिषिंचेन्मंत्रेण ।
वास्तोष्पतइति । ततःकर्त्तुर्वामतःपत्नींमुपवेश्यपात्रपातितजलेनपल्लवदूर्वा ॥ भिरुदङ्मुखास्तिष्ठेतोभिषिंचेयुरापोहिष्ठेत्या
दिमंत्रैः । सुरात्विस्त्वेदयोअभिषेकलिंगामंत्राः ॥ ॥ ततःआशीर्वादाः ॥ ॥ इतिस्वस्तिवाचनप्रयोगः ॥ ततः
कौतुकबंधः ॥ आचार्योदर्भमयकूर्चेउदकुंभंनिधायत दुत्तरतःसाक्षतंकांस्यपात्रंनिधाय तत्रपंचगुणीकृतंकापाससूत्रंनिधाय
तत्समीपेप्राङ्मुखंयजमानमुपवेश्यकुशहस्तःकुंभोदकेनमंत्रैः सूत्रमभिषिंचेत् । पूर्वगायत्र्याः । अग्निमीळे । ईषेत्वा ।
अग्नआयाहि । शन्नोदेवी । आपोहिष्ठाएतोन्विंद्रं। ऋतंच । सत्यं। रक्षोघ्नामंत्राः। कृणुष्वपाज ॥ सहस्रशीर्षा । हिरण्य
वर्णा । यजाग्रतः । एवंसूत्रमभिषिंच्यजातवेद सइतिमंत्रेणचंदनेनसूत्रंविलिप्यत्वंयविष्ठएरक्षतनोइतिमंत्रेण यजमानस्य
पत्न्याहस्तेबध्नीयात् । ततःकर्मसादृगुण्यार्थंदक्षिणाद्द्यात् ॥ ॥ इतिकौतुकबंधः ॥ ततःसमाचारात्फलहस्तोयजमान
आचार्यादीन्संप्रार्थ्यअग्रेफलंनिधायप्रणमेत्। तत्रमंत्रः ॥ अस्ययागस्यनिष्पन्त्यैभवंतोभ्यर्थितामया ॥ सुप्रसन्नैप्रकर्त्तव्यं
शांतिकंविधिपूर्वकं ॥ ततःआचार्यःसोपग्रहोबद्धशिखआचम्यग्रहवेदीमंडपकुंडादीनां प्रोक्षणार्थंपंचगव्यंताम्रवर्जितपात्रे
कुर्यात्तत्राग्रायागोमूत्रंगायत्र्याप्रणवेनवाकुर्यात्। श्वेतायागावश्चिदितिगोमयं । कपिलायाःपयश्चक्रंयदस्येति। नीलायाद
धिक्राव्णेइति । कृष्णायाघृतंघृतवतीइति । तदभावेअन्यासांग्राह्यं । एवंमंत्रैः पात्रेपंचगव्यंसंगृह्यगायत्र्यातदभिमंत्र्यकुंडं
ग्रहवेदिमंडपंचगायत्र्याप्रोक्षयेत् । ततःकुंडेस्थंडिलेवायथाविधिनापंचभूसंस्कारान्कृत्वा वरदनामानमग्निंप्रतिष्ठापयामीति
अग्निंसंस्थाप्यप्रादेशमितंसमिधमग्नौप्रक्षिपेत् । ततःइदंभूमेरितिभूमिजपंकृत्वा इमंस्तोमामितितृचेनाग्निपरिसमुह्यअग्रेणाग्नि
परिक्रम्याग्नेर्दक्षिणतः कुंडाद्बाहुमात्रांभूमीत्यक्त्वा ब्रह्मासनंसंस्थाप्य प्राङ्मुखस्थित्वा तदुपरिप्रागग्रान्दर्भानास्तीर्यतेनैव
प्रत्यावजेत् । अथब्रह्मातत्रोदङ्मुखीजलधारांदत्वानिरस्त इतितृणानिरस्यजलंस्पृष्ट्वाआवसोरित्यग्निभिमुखउपविशेत् ।

ततआचार्यपात्राणामासादनंकुर्यात् । तत्राग्रेऽत्तरस्यांपूर्वपूर्वं । शुद्धोदकपात्रचरुस्थाल्यादिप्राकृतंतत्रविशेषः । मेक्षणा
नंतरंग्रहवेद्यामास्तरणार्थमहतंसदशंश्वेतवस्त्रं। ग्रहस्थापनार्थंतंडुला। ग्रहवेद्यपरिबंधनार्थंवितानः। रक्तचंदनादिनिचंदनानि।
कृणवीरादीनिपुष्पाणि। कुदुरुप्रभृतानीधूपद्रव्याणि। गुडोदनादीनिनैवेद्यद्रव्याणि । द्राक्षादीनिफलानि। ताम्रंमृन्मयंवा
कलशं । पंचपल्लवाः । पंचमृदः । फलं। वस्त्रद्वयं । पंचरत्नानि । सर्वौषधयः बर्हिः । इध्मोविंशतिकाष्ठकःआज्यं ।
आज्यस्थाली । समिद्द्वयं । संमार्गकुशाः । स्रुकस्रुवौ । अर्कादिवृक्षाणांसमिधःप्रत्येकंमष्टविंशतिरष्टौवा । दधि । मधु।
होमार्थंतिलाः। अन्यद्धोमापयोगिसविधेन्वादिदक्षिणाः। एवमेतान्यासाद्यगायत्र्याभिमंत्रितोदकेनासादनक्रमेणद्रव्याणि
संप्रोक्ष्यसजलांचरुस्थालीमग्नावधिश्रयेत् ॥ ततोग्नेःपश्चात्प्रागग्रान्दर्भानास्तीर्यतेषुलूखलमुसलकं सपात्रसहविःशुपाण्या
साद्यकंसपात्रगृहीतांस्तंडुलानुलूखलेआदित्यायत्वाजुष्टंनिर्वपामि इतिनिर्वपेत् । पुनरपिकंसेनादायनिर्वपणं। सोमायत्वा
भौमायत्वा । बुधायत्वा । बृहस्पतयेत्वा । शुक्रायत्वा । शनैश्चरायत्वा । राहवेत्वा । केतुभ्यस्त्वाजुष्टंनिर्वपामीतिसर्वत्र।
ततोद्विस्तूष्णींनिरूप्यदक्षिणोत्तराभ्य पांणिभ्यांत्रिःकंडनं । त्रिरुत्पवनं । त्रि । फलीकरणं । त्रिःप्रक्षालनं। पवित्रांतर्हि
तायांस्थाल्यांतंडुलानामावापनंत्रिःप्रदक्षिणमेक्षणेनावपटनं। ततोग्रहाणांग्रहवेद्यांस्थापनं। तत्रआसादितमहतंवस्त्रंमादश
सुदादशंवावेद्युपरिसमास्तीर्यतदुपरिअष्टदलंग्रहाणांस्थापनार्थं। चंदनादिनाकार्यं । तच्चेत्थं । चतुस्त्रिंशदंगुलक्षेत्रमानेन
मध्यसूत्रंदत्वातस्तस्यसूत्रस्यद्वादशभागान्कृत्वाएकभागंभाग्भवंपाश्वतिपंचत्यक्त्वाअवशिष्टभागदेषाकस्यषड्भागान्कृत्वा
मध्येसूत्रादिनिधाय अंशद्वयेनैकंवृत्तं । तदुपरिअंशद्वयेनद्वितीयं । तदुपरिअंशद्वयेनतृतीयं । एवंवृत्तत्रयंविधायदक्षिणो
दक्सूत्रंदत्वा । विदिक्कोणसूत्रद्वयंचदत्वा बाह्यवृत्तांतरालमानं सूत्रंकेसरवृत्ताग्रेनिधाय तस्योभयतोर्द्धनिशाकरनालिख्य
संधिषुअग्रेष्टौसीमारेखादत्वादितिदिग्विदिगात सूत्रयोस्तृतीयोवृत्तांतरालार्द्धमानेनदलाग्राण्युपरिकुर्यात् । इदंत्यक्त्वा
शपर्यंतंकर्त्तव्यंततः पात्रांतलेपुवृत्तचंद्रार्द्धादिसंमार्ज्य पत्राष्टकंसम्याद्विदध्यायेत् । तद्बहिश्चतुरस्रंचतुर्द्वारोपेतंविधाय
कर्णिकायामारभ्यग्रहाणांमंडलानिकुर्यात् । यत्रचतुर्थांशोनांगुलद्वयव्यासार्द्धसूत्रेणकर्णिकांतर्वृत्तं मंडलंलिखेत् ॥ आग्नेय





दलेपादोनयवपंचांगुलमितमध्यसूत्रेणचतुरस्रंनिष्पादयेत् ॥ तच्चचतुरस्रनिःपादनप्रकारेण । दक्षिणेअंगुलद्वयमानेन
भूमिरेखांतिर्यगातांकृत्वा तन्मध्यतस्त्र्यंगुलंमध्यसूत्रंदत्वापूर्वाग्रंत्रिकोणंकार्यं । अथेशदलेचतुरंगुलंमध्यसूत्रंदत्वा मूलादेका
गुलंस्येत्यक्त्वाअपतिद्यतिर्यकद्व्यंगुलांरेखांकृत्वा पूर्वाग्र्यात्र्यंगुलमानेनत्रिकोणंपश्चएग्रादेकांगुलं त्रिकोणमितित्रिकोणद्वयं
पूर्वापराग्रंमध्यैकभुवंकुर्यात् ॥ उत्तरदलेत्र्यंगुलमध्यसूत्रंद्यंगुलभुवनदीर्घचतुरस्रंकार्यं । पूर्वदलेचतुरंगुलंमध्यसूत्रंदत्वा
त्र्यंगुलविस्तारं । मूलंभूसूत्रंदक्षिणोत्तरयोर्द्व्यंगुलभित्तींपूर्ववत्त्रिकोणंद्व्यंगुलंमध्यंकुर्यादेवं पंचकोणं । पश्चिमदलेएकांगुल
सप्तयवैकयूकामितंज्यासूत्रंदत्वाएकांगुलव्यासार्द्धसूत्रेणवृत्तार्द्धंकुर्यात् ॥ निर्ऋतिदलेसप्तयवाधिकद्व्यंगुलव्यासार्द्धेनराहो
वृत्तंमंडलं । वायव्यदलेनवांगुलंमध्यसूत्रंपंचांगुलत्रियवपंचयूकापरिमित मूलभुवंदीर्घत्रिकोणांमुत्तराग्रंध्वजाकृतिमंडलं ॥
अत्रस्थापनावसरेउक्तप्रकारेणमंडलकरणासंभवाद्विवादिनाकृत्वामंडलानिकर्त्तव्यानि । अष्टदलकरणामप्येवमेवज्ञेयं ॥
एवंमंडलानिकृत्वाकर्णिकायांताम्रमयींसूर्यप्रतिमांसंन्यस्याग्नेयदलेस्फाटिकींचंद्रस्यन्यसेत् ॥ एवंदक्षिणदलेरक्तचंदनमयीं
भौमस्यऐशान्यांसौवर्णीबुधस्य उत्तरदलेसौवर्णीगुरोः पूर्वदलेराजतींशुक्रस्य । पश्चिमदलेलोहमयींशनेः। नैर्ऋत्येसीस
मयींराहोः । वायव्यदलेकांस्यमयींकेतोः । अथमृद्दारुमया प्रतिमाःसन्यस्याथवाशुक्लतंडुलपुंजान्वासंपादयेत् ॥ अन्य
देवानामपिप्रतिदलंतत्तद्देवानांस्थापनंकार्यं ॥ भास्करादुत्तरस्यांशंभोःस्थापनं । सोमाग्रदाग्नेयांउमायाः । भौमादक्षिणे
स्कंदस्य । बुधात्प्रतीच्यांविष्णोः । गुरोःप्राच्यांप्रजापतेः । शुक्रात्पूर्वस्यामिंद्रस्य । शनैश्चरान्निर्ऋतौ। यमस्य । राहो
उत्तरस्नकालस्य । केतोर्दक्षिणेचित्रगुप्तस्य । ग्रहदेवतयोर्मध्येअधिदेवानस्थापयेत् ॥ तेचअग्न्यादयः ॥ अथलोक
पालान् ॥ राहोर्मंडलेउत्तरस्यांविनायकस्य ॥ शनैश्चरमंडलेउत्तरस्यांदुर्गायाः । सूर्यस्यमंडलेउत्तरस्यांवायोः । राहो
र्मंडलेदक्षिणस्यांअश्विनीकुमारयोः । एतेलोकपालाः । ग्रहाग्नीनाग्रहनक्षत्राणांचवन्तन्मंडलेप्राच्यांस्थापनंकार्यं ।
दिकपालान्स्वस्वदिक्षु । एवंसर्वत्रसर्वान्यथास्थानंसन्यस्यपूजांकुर्यात् । सर्वत्रहोमप्रकारणोक्तमंत्रैःस्थापनंकर्त्तव्यमिति
केचित् । स्थापनप्रकरणेमंत्राणामनुपदेशान्नेतिबहवः । अथपूजा । ग्रहवेदीःपश्चात्उदगग्रमासनं सन्यस्यतत्रयजमानः

प्राङ्मुखउपविश्याचम्यप्राणानायम्यस्वदक्षिणेपूजासंभारंसंन्यस्य ताम्रपात्रेशुद्धोदकमायुर्यचंदनपुष्पाक्षतांस्तत्रनिक्षिप्य कुशाग्रैस्तजलंसंस्पृश्यगायत्र्यादि मंत्रैस्तज्जलमभिमंत्र्यकुशाग्र गृहीतजलेनपूजोपहारंसंप्रोक्ष्य आदित्यादिग्रहाणांपूजोपहाराणांपवित्रतास्तु । इतिसंप्रार्थ्य ॥ अस्त्वितिद्विजैःप्रत्युक्तेदेशकालादिप्रार्थयेत् ततोदेशकालौसंकीर्त्यहिद्गतांकामनामाभाष्यसर्वाभीष्टसिद्ध्ये आदित्यादिग्रहाणांसपरिवाराणां पूजामहंकरिष्यइतिसंकल्प्य ग्रहाणामावाहनंकुर्यात् ॥ आवाहनंतुप्रतिमाक्षतपुंजादिस्थापितंसंस्पृश्यकार्यं । सहस्रदीप्तेरक्ताभंग्रहाणांप्रथमस्तथा । त्वमादित्येषुसर्वाभंभानुमावाहयाम्यहं । भूर्भुवःस्वःभगवन्नादित्यग्रहाधिपतेकाश्यपगोत्र कलिंगदेशेश्वरजपापुष्पोपमांगद्युतेतेजोनिधे त्रिलोकप्रकाशकत्रिदेवतामयमूर्त्तेनमस्ते सन्नद्धारुणध्वजपताकोपशोभितेनसप्ताश्वरथवाहने नागच्छपद्मकर्णिकायां ताम्रप्रतिमां प्राङ्मुखींवर्त्तुलपीठेधितिष्ठपूजार्थंत्वामावाहयामि । ततआग्नेयदले । शीतांशोशंखवर्णाभंद्विजराजविभोजने ॥ त्वयिपूजाकर्त्तुमिच्छंसोममावाहयाम्यहं ॥ ॐभू० भगवन्सोमद्विजाधिपतेसुधामयशरीरात्रिगोत्रयमुनादेशेश्वरगोक्षीरधवलांगकांतेद्विभुजगदावरदानांकितकर शुक्लांबरमाल्यानुलेपन सर्वांगामुक्तमौक्तिकाभरणरमणीयसमस्तलोकाप्यायकदेवतास्याद्यमूर्त्तेनमस्तेसन्नद्धधवलध्वजपताको पशोभितेनदशश्वेताश्वावाहने नागच्छपद्माग्नेयदले स्फटिकप्रतिमांप्रत्यङ्मुखींचतुरस्रपीठेधितिष्ठपूजार्थंत्वामांवाहयामि ॥ ततोदक्षिणदलेग्रहाणामर्पितवलंतीक्ष्णंदीप्तांगारसमप्रभं । नित्यंमंदारुणाभंचभौममावाहयाम्यहं ॥ ॐभू० भगवन्नंगारकाग्न्याकृतेभारद्वाजगोत्रावंति देशेश्वरज्वालापुंजोपमांगद्युतेचतुर्भुजशक्तिशूलगदाखट्वांगधारिन्रक्तांबरमाल्यानुलेपनप्रवालाभरणभूषितसर्वांगकरालोकदीप्तेनमस्ते सन्नद्धरक्तध्वजपताकोपशोभितेनरक्तमेषरथवाहने नागच्छपद्मदक्षिणदलेरक्तचंदनप्रतिमांदक्षिणामुखीं त्रिकोणपीठेधितिष्ठपूजार्थंत्वामावाहयामि ॥ ततईशानदले ॥ पीतं२शशिसुतं२ सौम्यं२ हिरण्याभरणप्रियं । इंदुज२सौम्यनामानंबुधमावाहयाम्यहं ॥ भू०भगवन् सौम्यसौम्याकृतेसर्वज्ञानमयात्रिगोत्रमगधदेशेश्वर कुंकुमवर्णांगद्युतेचतुर्भुजंखड्गखेटक गदावरदानांकितपीतांबरमाल्यानुलेप॰मरकताभरणालंकृतसर्वांगद्युतेविबुधपतेनमस्ते सन्नद्धपीतपताकोपशोभितेनचतुःसिंहरथवाहने नागच्छपद्मेशानदले





सुवर्णप्रतिमामुदङ्मुखींबाणाकारपीठेऽधितिष्ठपूजार्थंत्वामावाहयामि ॥ ततउत्तरदले । सुराणांगुरुपीताभंप्रणतांक्लेशनाशनं । यजेजीवंप्राणिनांचगुरुमावाहयाम्यहं ॥ ॐभू० भगवन्बृहस्पतेसमस्तदेवताचार्यांगिरसगोत्रसिंधुदेशेश्वरदीप्तसुवर्णसदृशांगाद्युतेचतुर्भुजदंडकमंडलवक्षसूत्रवरदानां कितपीतांवरमाल्यानुलेपन् पुष्परागमयाभरणरमणीयस्तमस्तविद्याधिपतेनमस्ते सन्नद्धपीतध्वजपताकोयशोभितेन पीताश्वरथवाहने नागछपद्मोत्तरदलमध्ये सुवर्णप्रतिमामुदङ्मुखींदीर्घचतुरस्रपीठेऽधितिष्ठपूजार्थंत्वामावाहयामि । ततःपूर्वदले । सुरारिषुमहावीर्यमसुराणांचमंत्रिणं । शंखगोक्षीरवर्णाभं२शुक्रमावाहयाम्यहं । ॐभू० भगवन्भार्गवसमस्तदैत्यगुरोभार्गवगोत्रभोजकटदेशेश्वर रजतोज्वलांगकांतेचतुर्भुजदंडकमंडलवक्षसूत्रवरदानां कितकरशुक्लांबरमाल्यानुलेपन वस्त्राभरणभूषितसर्वांगसमस्तनीतिशास्त्रनिपुणमतेनमस्ते सन्नद्धशुक्लध्वजपताकोपशोभितेनशुक्लाश्वरथेनागछ पद्मपूर्वदलमध्येरजतप्रतिमां प्राङ्मुखींपंचकोणपीठेऽधितिष्ठ पूजार्थंत्वामावाहयामि । ततःपश्चिमदले । वक्रानुवक्रगमनंस्वछंदगतिचारिणं ॥ असितापसवर्णाभंसौरिमावायाम्यहं ॥ ॐभू० भगवन्शनैश्चर भास्करतनयकाश्यपगोत्र सौराष्ट्रदेशेश्वरकज्जलाभकांते चतुर्भुजचापतूणीरकृपाणाभयांकितकर नीलांबरमाल्यानुलेपन नीलरत्नभूषणालंकृत सर्वांगसमस्तभुवनभीषणामर्षमूर्त्तेनमस्ते सनद्धनीलध्वजपताकोयशोभितेननीलगृध्ररथवाहने नागछपद्मपश्चिमदले कालायसप्रतिमांप्रत्यङ्मुखींचापाकारपीठेऽधितिष्ठ पूजार्थंत्वामावाहयामि । ततोनिर्ऋतिदले । चंद्रार्कौग्रसतेयस्तु ग्रस्ताबुत्सृतःतेपुनः ॥ नीलमेघप्रतीकाश२राहुमावाहयाम्यहं । ॐभू० भगवन् राहोरविसोममर्दन सिंहिकानंदनपैठीनसिगोत्र बर्बरदेशेश्वरकालमेघद्युते व्याघ्रवदनचतुर्भुजखड्गचर्मशूल वरदानांकितकृष्णांवरमाल्यानुलेपन गोमेदिकाभरणभूषित सर्वांगशौर्यनिधेनमस्ते सन्नद्धकृष्णध्वजपताकोपशोभितेन कृष्णसिंहरथवाहनेनागछपद्मनैरृतिदले सीसप्रतिमादक्षिणामुखींवर्त्तुलाकारपीठेऽधितिष्ठ पूजार्थंत्वामावाहयामि ॥ ततोवायव्यदले । ग्रहाणामुपग्रहंश्रेष्ठंःग्रहनक्षत्रचारिणं ॥ निर्वाणांगारवर्णाभंकेतुमावाहयाम्यहं ॥ भू०भगवन्केतोकामरूपजैमिनिगोत्रमध्यदेशेश्वर धूम्रवर्णध्वजाकृते द्विभुजगदावरदानांकितकर चित्रांबर माल्यानुलेपन वैडूर्यमयाभरणभूषितसर्वांग

चित्रशक्तेनमस्ते सन्नद्धचित्रध्वजपताकोपशोभितेन चित्रकपोतरथवाहने नागच्छपद्मवायव्यदले कांस्यप्रतिमांदक्षिणा
मुखींध्वजाकारपीठेधितिष्ठपूजार्थंत्वामावाहयामि ॥ ॥ इतिग्रहाणांस्थापनं ॥ अथाधिदेवतास्थापनं ॥ भास्करा
उत्तरस्यां । ॐभू० भगवंतंपंचवक्रंत्रिलोचनं वृषारूढंकपालशूलखड्वांगादिधारिणं चंद्रमौलिंआदित्याधिदैवतंशंभुमावा
हयामि ॥ ब्रतसोमादाग्न्येयां ॥ ॐभू० भगवतीमक्षसूत्रकमलदर्पणकमंडलुधारिणीं नानाभरणभूषितांत्रिदशपूजितां
सोमाधिदैवतंमुमामावाहयामि । भौमाद्दक्षिणे ॥ ॐभू० भगवंतंषण्मुखंडंकविभूषणंरक्तांबरधरंमयूरवाहनं कुर्कुटघंटा
पताकाशक्त्युपेतंचतुर्भुजं अंगारकाधिदैवतंस्कंदमावाहयामि। बुधात्पश्चिमे।. ॐभू० भगवंतंचतुर्भुजंकौस्तुभादिनानाभरण
भूषितंपीतांबरकौमोदकीपद्मशंचचक्रोपेतंबुधाधिदैवंविष्णुमावाहयामि ॥ गुरोःपूर्वस्यां ॥ ॐभू० भगवंतंब्रह्माणंपद्मा-
सनस्थं जटिकंचतुर्मुखंअक्षमाला स्रुवपूस्तककमंडलुधारिणं कृष्णाजिनवाससंबृहस्पत्यधिदैवतंप्रजापतिमावाहयामि ॥
शुक्रात्पूर्वस्यां। ॐभू० भगवंतंचतुर्दंतगजारूढंवज्रांकुशधरंप्राचीपतिं नानाभरणभूषितंशुक्राधिदैवतमिंद्रमावाहयामि ॥
शनेर्निर्ऋतौ ॥ ॐभू० भगवंतमोषत्पीनंदंडहस्तंरक्तवर्ण सदृशंपाशधरंकृष्णवर्णमहिषारूढंसर्वाभरणभूषितं शनैश्चराधि
दैवतंयममावाहयामि । राहोरुत्तरस्यां ॥ ॐभू० करालवदनंनित्यगंभीषणंपाशदंडधरं सर्पवृश्चिकरोमाणाराहूधिदैवंकाल
मावाहयामि ॥ केतोर्दक्षिणे ॥ ॐभू० उदारवेषंसौम्यदर्शनंलेखिनीपत्रोपेतद्विभुजंकेत्वधिदैवंचित्रगुप्तमावाहयामि ॥
॥ इत्यधिदेवता ॥ अथप्रत्यधिदेवता ॥ ॥ प्रत्यधिदेवतास्तुग्रहदेवतयोर्मध्ये स्वस्वमंडलेस्थापनीयाः ॥ अतःप्रति
दैवतंस्थानानिनोच्यंते ॥ सूर्यादितः ॥ ॐभू० भगवंतंपिंगलभ्रूश्मशुकेशंपिंगाक्षं त्रिनयनमरुणवर्णछागस्थसाक्षसूत्रं
सप्तार्चिषशक्तिवाहस्तद्वयंआदित्यप्रत्यधिदैवमग्निमावाहयामि ॥ ॐभू० स्त्रीरूपधारिणीश्वेतवर्णामकरवाहनाःपाशकलश
धारिणीर्मुक्ताभरणभूषिताः सोमप्रत्यधिदैवता आपआवाहयामि ॥ ॐभू०भगवतींशुक्लवर्णांदिव्याभरणभूषितांचतुर्भुजां
सौम्यवपुषां चंद्रांशुसदृशांवरां रत्नपात्रसस्यपात्रौषधि पात्रपद्मोपेतकरांचतुर्दिग्गाजपृष्ट गतांअंगारकप्रत्यधिदैवतांक्षिति
मावाहयामि ॥ विष्णोःस्वरूपंप्रागुक्तमेव ॥ इंद्रस्यच । ॐभू० संतानमंजरीवरदानद्विभुजां सर्वाभरणाभूषितांगींशुक्र





प्रत्यधिदैवतामिंद्राणीमावाहयामि ॥ ॐभू० यज्ञोपवितिनंहंसस्थंएकवक्रं अक्षमालास्रुवपुस्तककमंडलुसहितं चतुर्भुजंशनै
श्चरप्रत्यधिदैवतंप्रजापतिमावाहयामि ॥ ॐभूर्भुवस्वः अक्षसूत्रधरान्कुंडलिकापुछ्युक्तानेक भोगान्भोषणान्राहूप्रत्यधि
दैवतान्सर्पान्आवाहयामि ॥ ॐभू० पद्मासनस्थंजटिलंचतुर्मुखंअक्षमालास्रुवपुस्तककमंडलुधरं कृष्णाजिनवाससंपार्श्वे
स्थितहंसकेतुप्रत्यधिदैवतंप्रजाब्रह्माणम.वाहयामि ॥ ॥ इतिप्रत्यधिदेवता ॥ अथग्रहाग्नीनांग्रहनक्षत्राणांस्थापनं ॥
॥ तत्रस्वस्वमंडलमध्येप्राच्यांदिशिकर्त्तव्यं ॥ आदित्यमंडलेप्राच्यां ॥ भू०कपि०भ्रिं०भू० विशाखाइहागछइहतिष्ठ
ॐसोममंडलेपिंगलइहागछेहतिष्ठ । कृत्तिकाःइहागछतइहतिष्ठत । भौममंडलेप्राच्यांधूमकेतोइहागछेहतिष्ठ । पूर्वाषाढाः
इहागछतइहतिष्ठत । बुधस्यमंडलेप्राच्यां । जठराग्नेइहागछेहतिष्ठ । धनिष्ठा । इहागछतइहतिष्ठत । गुरोर्मंडलेप्राच्यां ।
शिखिइहागछेहतिष्ठ । उत्तराफाल्गुनी । इहागछतंइहतिष्ठतं । शुक्रस्यमंडलेप्राच्यां । हाटकइहागछेहतिष्ठ । पुष्यइहा-
गछेहतिष्ठ । शनैश्चरमंडलेप्राच्यां महातेजाइहागछेहतिष्ठ । रोहिणीःइहागछतइहतिष्ठ । राहोर्मंडलेप्राच्यांहुताशनइहा
गछेहतिष्ठ । भरणीइहागछतइहतिष्ठत । केतुमंडलेप्राच्यां हुताशनइहागछेहतिष्ठ । आश्लेषाः इहागछतइहतिष्ठ ॥
॥ इतिग्रहाग्नीनांनक्षत्राणांचस्थापनं ॥ अथलोकपालाः ॥ ॥ राहोरुत्तरप्रदेशे ॥ ॐभू० भगवंतंचतुर्भुजंत्रिनेत्रंगजाननं
नागयज्ञोपवीतिनंशशांककृतशेखरं दंताक्षमालापरशुमोदकोपेतंविनायकमावाहयामि ॥ शनेरुत्तरतः ॥ ॐभू० भगवतीं
शक्तिबाणशूलखड्गचक्रचंद्रबिंबखेटककपालमुकुंदकोपेत दशभुजांसिंहारूढांदुर्गारस्य दैत्यासुहारिणींदुर्गामावाहयामि ॥
सूर्यादुत्तरतः ॥ ॐभू० भगवंतंभावद्धरणिपृष्ठगतं ध्वजवरदानधारिणं धूम्रवर्णंवायुमावाहयामि । राहोर्दक्षिणतः। ॐभू०
नीलोत्पलाभंनीलांबरधारिणं चंद्रार्कौपेतद्विभुजंपद्माकाशमावाहयामि ॥ केतोर्दक्षिणतः ॥ ॐभू०प्रत्येकमौषधीपुस्तको
पेतदक्षिणवामहस्तावन्योन्यसंयुक्त देहावेकस्यदक्षिणपार्श्वेऽपरस्य वामपार्श्वेरत्नभांडकर शुक्लांबरधारिनारीयुग्मोपेतौदेव
भिषजावश्विनायावाहयामि ॥ ॥ इतिलोकपालाः ॥ अथदिक्पालाः ॥ ॥ पूर्वस्यां ॥ ॐभू० स्वर्णवर्णसहस्राक्षंवज्र
पाणिशचीप्रियमिंद्रमावाहयामि ॥ आग्नेय्यां ॥ ॐभू० सप्तार्चिषंसप्तहस्तंस्रुक्स्रुवशक्त्यक्षस्रुक्तोमरव्यजनघृतपात्राणि

दधानंस्वाहा प्रियंमेषवाहनमग्निमावाहयामि ॥ दक्षिणस्यां । ॐभू० रक्तवर्णंदंडधरं महिषवाहनमिलाप्रियंयममावाह-
यामि ॥ नैर्ऋत्यां ॥ ॐभू०नीलवर्णंखड्गचर्मधरमूर्द्धकेशंनरवाहनं कालिकाप्रियंनिर्ऋतिमावाहयामि । वारुण्यां । ॐभू०
रक्तभूषणंनागपाशधरंमकरवाहनं पद्मिनीप्रियंवरुणमावाहयामि ॥ वायव्यां ॥ ॐभू०श्यामवर्णंहेमदंडधरंकृष्णमृगवाहनं
जगत्प्राणरूपंमोहिनीप्रियंवायुमावाहयामि ॥ उत्तरस्यां ॥ ॐभू० स्वर्णवर्णंनिधिश्वरंगदापाणिमश्ववाहनंचित्रिणीप्रियं
कुबेरमावाहयामि । ऐशान्यां । ॐभू०शुद्धस्फटिकवर्णंवरदाभयंशूलाक्षसूत्रधरंवृषभवाहनं गौरीप्रियमीशानमावाहयामि॥
पूर्वेशानयोर्मध्ये ॥ ॐभू०भगवंतंपद्मासनस्थंजटिलंचतुर्मुखंअक्षमालास्रुवपुस्तककमंडलुधारिणंकृष्णाजिनवाससंस्वराप्रिय
ब्रह्माणमावाहयामि ॥ निर्ऋतिवरुणायोर्मध्ये ॥ ॐभू० अक्षसूत्रंधरंकुंडलिकापुछ्युक्तसहस्रभोगंशुभ्रवर्णमनंतमावाह-
यामि ॥ एवंग्रहवेद्यांदेवान्संस्थाप्यग्रहपीठादैशान्यांयजमानस्याभिषेकार्थंकुंभंस्थापयेत् । ग्रहपूजांविधायानंतरंवाकलश
स्थापनं । तत्राक्षतैरष्टदलंकृत्वा कर्णिकायांकलशस्थापनंकुर्यात ॥ भूमिर्भूमिरितिइंद्रोयजुर्भूम्यादयोदेवता ॥ भूम्यभि
मंत्रणेविनियोगः । भूमिः।३। आविशन्कलशेतिउशनागायत्रीसोमः । कलशस्थापनेविनियोगःआविशन्कलाः । अपां
व्रतस्यआपस्त्रिष्टुवापः । कलशस्थापनेविनियोगःआविशन्कालाः । अपांव्रतस्यआपस्त्रिष्टुवापः । कलशपूरणेविनि-
योगः ॥ हाउ३। ऐरयत् ॥ त्वमिमाऔषधीरितिसोमव्रतस्यसोमस्त्रिष्टुप्सोमः । औषधीप्रक्षेपेविनियोगः । हाउ३।
हौवा३। अनेनसर्वौषधीनांप्रक्षेपः ॥ दधिक्राव्णइतिअग्निरनुष्टुप्दधिप्रक्षेपेविनियोगः । ॐहायि । दधिक्राव्णोअक्का-
रिषम् । ततःपंचमृतिकास्यमंत्रेण । स्पोनापृथिवीइतिमेधातिथिःपरउष्णिक्पृथिवी । मृतिकाप्रक्षेपेविनियोगः स्योना
पृथि० । चंद्रमाअप्स्वरंतरेतित्रितःपंक्तिःविश्वेदेवाः । हिरण्यादीनांप्रक्षेपेविनियोगः। चंद्रमाआउवा । अनेनसंपंचरत्नस्य
हिरण्यस्यप्रक्षेपः । अयमूर्जैतिप्रजापतिरनुष्टुबुदुंबरः । पंचपल्लवनिधानेविनियोगः ॥ अयमूर्जाः० ॥ इदंवसोइतिगरो
गायत्रींद्रः । वस्त्रवेष्टनेविनियोगः । इदंवसाउ । अनेनवासोभ्यामावेष्टनंकलशस्यमुखे । अभावेवाससासूत्रेणवासघात
मितिलुशःपंङ्-रिंद्रः । पूर्णपात्रनिधानेवि० सघातंवृषणम् । अनेनसाक्षतसफलपूर्णपात्रनिधानं । केचित्अयमूर्जैति





मंत्रेणमध्येफलंप्रक्षिपंति । ततःकलशेवरुणमावाहयेन्मंत्रेण । यद्ाकदेतिवसिष्ठोबृहतीवरुणः । वरुणावाहनेविनियोगः ।
यदाकदाइतिपठित्वा वरुणइहागछेहतिष्ठ । ततस्मिन्नकलशेतीर्थावाहनं ॥ कलशंस्पृष्ट्वा ॥ सर्वेसमुद्राःसरितःसरांसिचन
दानिच । आयांतुयजमानस्यदुरितक्षयकारकाः ॥ इतिपठेन । ततःप्रतिष्ठा । वाक्मनःप्राणःपाणोइत्यादिएताएवस
महाव्रताइत्यादिप्रतिष्ठामंत्रौपठित्वा आदित्यादिग्रहाः स्थापितदेवताःसकलशाःसुप्रतिष्ठितावरदाभवंतु ॥ ॥ अथपूजा ॥
साचप्रत्युपचारंमंत्राणामनाद्याहृतिभिरुपचाराःकर्त्तव्याः । व्याहृतीनांविश्वामित्रजमदग्निभरद्वाजागायत्र्युष्णिगनुष्टुबग्नि
वायुसूर्याः । पूजायांविनियोगः । ॐभू० सूर्यायआसनंसमर्पयामि ॥ एवंपाद्यं । अर्घ्यं । आचमनीयं । स्नानं । पुनरा
चमनीयम् । रक्तंवस्त्रं । चंदनं । रक्तचंदनं । करविरपुष्पाणि । कुदरुद्रव्यंधूपे । तच्चागुरुमिश्रं । सर्वत्र । धूपनिवेदनं ॥
गायत्र्या । उद्वयंतमसस्परितिमंत्रेणदीपदानंगायत्र्याविश्वामित्रौगायत्रीसविता । धूपदानेविनियोगः ॥ गायत्रीपठित्वा
सूर्यायधुपंनिवेदयामि । उद्वयेतेतिप्रस्कण्वापंक्तिः सूर्यदिपदानेविनियोगः ॥ सघृतगुडोदनोनैवेद्यं । पुनराचमनीयं ।
द्राक्षांफलनिवेदनं । प्रदक्षिणास्तुतिः । नमस्कारः । एतेमंत्राःसर्वत्रपूजायांप्रयोज्या । ततःसूर्यमंडलस्थानांपूजनं ।
व्याहृतीरुच्चार्यशंभवे आसनंसमर्पयामि । एवमन्येप्युपचाराः । चंदनंसर्वेषांसाधारणं । यथासंभवंशतपत्रादीनि
पुष्पाणि । गुग्गुलधूपः । गोघृतेनदीपः । घृतोदनोनैवेद्यं । सर्वेषासाधारणोयंपूजाविधिः । एवंशंभुसपूज्य । ॐभू०
अग्नयेआसनंसमर्पयामि । एवमन्येप्युपचाराः । वायवेनमः । कपिलायनमः । विशाखाभ्योनमः । एवंसूर्यमंडल
स्थानसंपूज्य । सोमंपूजयेत । सोमायआसनंसमर्पयामीत्येवमासनाद्युपचारैःपूजनं । श्वेतंवस्त्रं । श्वेतंचंदनं । संध्याविं
काशिकमलंपुष्पं । घृतलिप्तपवैरगरुसहितैधूप । घृतमिश्रःपयसिपक्वओदनोनैवेद्यं ॥ इक्षुसमर्पणं । मंत्राःपूर्वोक्ता
एवसर्वत्रज्ञेयाः । एवंउमायैनमः । अद्भ्योनमः । पिंगलायनमः ॥ कृतिकाभ्योनमः । एवसोमसंपूजयेत् ॥ भौमाय
इदमासनमित्यादि । रक्तंवस्त्रं । रक्तचंदनं । जयापुष्पं । सर्जरसकृतःसागरुधूपः । घृतमिश्रःषष्टिकःतंडुलकृतओदनो
नैवेद्यं । पूगीफलं । एवंभौमंसंपूज्यमंडलस्थान्पूजयेत् । ॐभू०बुधायआसनंसमर्पयामि । एवमन्येप्युपचाराः । पीतंवस्त्रं ।

कुंकुममिश्रंपीतंचंदनं। चंपकपुष्पं। अगरुकृतोधुपः। क्षीरमिश्रोओदनोनैवेद्यं। नारंगफलं। ततोविष्णवेनमः। जठराग्नये नमः। धनिष्ठाभ्योनमः। ततोगुरोःपूजा। ॐभूर्भुवःस्वःबृहस्पतयेइदमासनं। समर्पयामि। एवंपाद्यं। अर्घ्यं। आचमनीयं। एवंसर्वत्र। पीतवस्त्रं। पीतचंदनं। शतपत्रपुष्पाणि। तुरःकरःकृतःसागरुर्धूपः। साक्षारइतिलोके। दधिमिश्र ओदनोनैवेद्यं। जंबीरफलं। ततःप्रजापतयेनमः। इंद्रायनमः। शिखिनेनमः। उत्तराफाल्गुनीभ्यांनमः॥ ततःशुक्रं पूजयेत्। शुक्रायेदमासनमित्यादिश्वेतंवस्त्रं। श्वेतचंदनं। जातिपुष्पाणि। अगरुबिल्वफलमज्जामिश्रोधूपः। घृतमिश्र ओदनोनैवेद्यं बीजपूरकफलं। ततःइंद्रायनमः। इंद्राण्यैनमः। हाटकनामाग्नयेनमः। पुष्यायनमः। ततःशनैश्चरायेद मासनमित्यादि। नीलीव्यतिरिक्तरंगरंजितंकृष्णंवस्त्रं। अगरुचंदनं। मल्लिकाकुसुमानि। तानिचजातीपुष्प सदृशाणि दीर्घपत्राणिगुग्गुलकृतोधूपः। तिलमुद्गमिश्रपक्वओदनोनैवेद्यं। उत्ततीफलं। ततःयमायनमःप्रजापतयेनमः। महातेजसे नमः। रोहिणीभ्योनमः। दुर्गायैनमः। ततोराहवे इदमासनमित्यादि। कृष्णंवस्त्रं। अगरुचंदनं। कुटजपुष्पाणि। लंक्षाकृतोधूपः। माषमिश्रःओदनोनैवेद्यं। नालिकेरफलं। ततःकालायनमः। सर्वेभ्योनमः। हुताशनायनमः। भरणीभ्योनमः। विनायकायनमः। आकाशायनमः। ततःकेतवेनमइदमासनंमित्यादि॥ केतुभ्योनमः। इतिवा। धूम्रवर्णवस्त्रं। अगरुचंदनं। नानाविधपुष्प णि। लाक्षाकृतोधूपः। विविधओदनोनैवेद्यं। दाडिमफलं। ततःचित्रगुप्ताय नमः। ब्रह्मणेनमः। हुताशयनमः। अश्लेषाभ्योनमः। अश्विनीकुमाराभ्यांनमः। एवंमंडलस्थान्संपूज्य स्वस्वदिक्षु इंद्रादिदिक्पतीन्पूजयेत्। इंद्रायइदमासनमित्येवं। एवंअग्नयेनमः। यमायनमः। निर्ऋतयेनमः। वरुणायनमः। वायवे नमः। कुबेरायनमः। ईशानायनमः। ब्रह्मणेनमः। अनंतायनमः। यत्रद्रव्यांतरंविहितोधुपोभवति। तत्रसर्वत्र। अगरुःसौरभ्यार्थंदेयः। एवंसर्वोपचारैरिंद्रादीन्स्वस्वदिक्षुसंपूज्य ईशान्यांस्थापितकलशेवरुणंसर्वोपचारैःपूजयेत्। पूजांपरिसमाप्यग्रहवेदुपरिशोभनः फलपुष्पोपेतोवितानःस्थापनीयाइदंवितानं फलपुष्पोपेतंसुशोभनसूर्यादिदेवताप्रीत येमयानिवेदितनममइतिनिवेदयेत्। सर्वत्रपूजायामुक्तद्रव्यालाभेप्रतिनिधिभूतं यथालाभंतत्सदृशमुपादेयं चंदनपुष्प





फलादि। ततआदित्यादीनांसपरिवाराणांपूजनकृतस्यविधेः सर्वंपरिपूर्णमस्तु। इतिपूजापरिपूर्णतांप्रार्थयेत्। ग्रहाणा नैवेद्यदानावसरेनैवेद्यार्थं पात्रांतरेउध्धृत्यशेषस्यशेषस्यहोमार्थंस्थापनंकार्यं॥ ॥इतिपूजा॥ ततआचार्यःपवित्रांतर्हितं चरुमभिघार्यउदगुद्वास्यप्रत्यभिघारयेत्। अग्निमुपसमाधायपुरस्ताद्दक्षिणतःउत्तरतःपश्चादित्येवमग्नेःपरिस्तरणं॥ उत्तरतः प्रणीतासादनं। बर्हिषिस्थालीपाकस्यासादनं। इध्महोमः। आज्यसंस्कारः। पूर्वस्यामाज्यमपरस्थालीपाकः। अदिते नुमन्यस्वेत्यादिमंत्रैःप्रसेकः। देवसवितरितिपर्युक्षणंतपश्चतेजश्चेत्यादिप्रपदैरूपाक्षजपः। पात्रसंमार्गः। ततश्चतुर्गृहीतेना ज्यभागौ। अग्नयेस्वाहा। सोमायस्वाहा। तथैवत्यागः। ततःप्रकृतिवत्स्रुवगृहीतेनस्रुच्यामुपस्तीर्यचरोर्मध्यात्पूर्वार्द्धा दवदानद्वयमादायस्रुवगृहीताज्येन पुनरभिघार्यअवदानस्थानद्वयं स्रुवगृहीताज्येनाभ्यज्य ॐआदित्यायस्वाहा॥ इदमा दित्यायनमम। एवंसोमायस्वाहा। इदंसोमायनमम। भौमायस्वाहा। इदंभौमायनमम। बुधायस्वाहा। इदंबुधायन मम। बृहस्पतयेस्वाहा। इदंबृहस्पतयेनमम। शुक्रायस्वाहा। इदंशुक्रायनमम। शनैश्चरायस्वाहा। इदंशनिश्चरायन मम। राहवेस्वाहा। इदंराहवेनमम। केतुभ्यःस्वाहा। इदंकेतुभ्योनमम। ततोग्रहमंत्रैराज्याहुतयोहोतव्याः॥ ताश्चा प्रतिग्रहमष्टावष्टौ। अधिदेवादीनांप्रतिदैवतंतिस्रतिस्रआहुतयोहोतव्याः। तत्रमंत्राणामृष्यादयः॥ बणमहानितिजमदग्नि र्बृहतीसूर्यः। आप्यायस्वेतिगौतमोगायत्रीसोमः। अग्निर्मूर्द्धेतिविरूपोगायत्रीभौमः। अग्नेविवस्वेतिप्रस्कण्वोबृहतीबुधः। बृहस्पतइत्यप्रतिरथस्त्रिष्टुप्बृहस्पति॥ शुक्रंतइतिभरद्वाजस्त्रिष्टुप्शुक्रः। शन्नःसिंधुद्वीपोगायत्रीशनिः। कयानश्चित्र इतिवामदेवोगायत्रीराहुः। केतुंकृण्वन्नितिमधुछंदागायत्रीकेतुः॥ अथाधिदेवतानां॥ आवोराजेति वामदेवस्त्रिष्टुप् रुद्रः। मदच्युदितिअतितोगायत्र्युमा। आमंदैर्विश्वामित्रोबृहतीस्कंदः। इदंविष्णुर्मेधातिथिर्गायत्रीविष्णुः। त्वमित्सेति भर्गोबृहतीप्रजापति। इंद्रंमिदितिमेधातिर्थिर्बृहतींद्रः। नाकेसुपर्णेतिवेनस्त्रिष्टुप्यमः। ब्रह्मजज्ञानमितिब्रह्मणस्पति स्त्रिष्टुप्कालः। चित्रइदितिउपस्तुतोजगतीचित्रगुप्तः॥ ॥अथप्रत्यधिदेवतानां॥ अग्निं दूतेतिमेधातिथिर्गायत्र्यग्निः। उदुत्तममितिशुनषेपस्त्रिष्टुबापः। नमःपृथिव्याइतिवसिष्ठोनुष्टुप्क्षितिः। सहस्रशीर्षेतिनारायणोऽनुष्टुप्विष्टः। इंद्रायेंदो

इतिकश्यपोगायंत्रीद्रः । नकिंइंद्रेतिवामदेवोगायत्रींद्राणी । प्रजापतेतिवसिष्ठस्त्रिष्टुप्प्रजापतिः । याः संवेतिवसिष्ठोऽनुष्टुप्सर्पाः । एषब्रह्मेतिकवषोगायत्रीब्रह्मा ॥ अथलोकपालानां ॥ आतूनइतिकुसीदीकाणवोगायत्रीविनायकः । इमंस्तोमेतिकुत्सोजगतीदुर्गाः । प्राणाशिशुस्त्रितउष्णिग्वायुः । आदित्प्रत्नस्येतिवत्सोगायत्र्याकाशः । एषोउषेतिप्रस्कण्वोगायत्र्यश्विनौ ॥ ॥ अथदिक्पालानां ॥ त्रातारमितिगर्गस्त्रिष्टुबिंद्रः । अग्निस्तिग्मेनेत्यग्निगायत्र्यग्निः । नाकेसुपर्णस्योक्ताः । वेत्थाहींतिविश्वमनाउष्णिक्निरृतिः । यदाकदेतिवसिष्ठोबृहतीवरुणः । वातआवायुत्वि । त्युलोगायत्रोवायुः । तवाहमिंतिसप्तर्षयोर्बृहतीसोमः । अभित्वाशूरेतिवसिष्ठोबृहतीशानः । मयिवर्चइतिपरमेष्ठींप्रजापतिरनुष्टुप्ब्रह्मा । अतोदेवाइतिमेधातिथिर्गायत्रीविष्णुः । श्रीरसीतिपरमेष्ठीप्रजापतिरेकपदागायत्रीश्री । वास्तोष्पतेतिवसिष्ठोजगतीवास्तुः । त्र्यंबकमितिवसिष्ठोनुष्टुप्रुद्रः ॥ सर्वत्रहोमेविनियोगइतिज्ञेयं ॥ होममंत्राणांप्रथमेमंत्रेप्रणवोच्चारणंकर्त्तव्यंनप्रतिमंत्रं ॥ एवमुक्तसंख्ययाग्रहाणामन्येषांचमंत्रैराज्याहुतिर्हुत्वा अर्कादीनांसमिद्धोदधिमध्वाज्यलिप्ता एकैकस्याष्टाविंशतिरष्टावष्टौवास्वस्वमंत्रैर्होतव्याः । समिद्धोमस्तुग्रहमंत्रैरेव । अर्कसमिधोबण्महानितिमंत्रेणसूर्यप्रीतयेहोतव्याः पालाशसमिधः आप्यायस्वेतिमंत्रेणसोमप्रीतयेहोतव्याः । खदिरसमिधोऽग्निर्मूर्द्धेतिभौमप्रीतयेहोतव्याः । अपामार्गसमिधोऽग्नेविवस्वेतिमंत्रेणबुधप्रीतयेहो० । पिप्पलसमिधोबृहस्पतिपरिदीयारथेनेतिबृहस्पतिप्रीतयेहोतव्याः । उदुंबरसमिधःशुक्रंतेतिशुक्रप्रीतयेहोतव्याः । शमीसमिधःशन्नोदेवीरितिशनिप्रीतयेहोतव्याः । दूर्वात्रयंकयानश्चित्रेतिराहुप्रीतयेजुहुयात् । कुशसमिधःकेतुंकृण्वन्नितिकेतुप्रीतयेहोतव्याः । कुशाःपत्रचतुष्टययुक्त । एवंसमिद्धोमानंतरंस्वस्वमंत्रैरष्टावष्टावाहुतयोहोतव्याः । शेषाःपूर्वयेस्थापितास्तएव । ततस्तिलैर्होमः । तत्रप्रतिग्रहमष्टोत्तरसहस्रंस्वस्वमंत्रेण तिलाहुतयोहोतव्याः ॥ अवशिष्टानांत्रयस्त्रिंशद्देवानांस्वस्वमंत्रैः प्रत्येकमष्टाविंशति संख्ययातिलाहुतियोहोतव्याः सर्वत्रऋत्विग्भिः पातितदक्षिणजानुभिरसुकंकैशैःकृतमौनैः संहतांगुलिपाणिभिर्होमःकर्त्तव्यः । विधूमेलेलिहानेऽग्नौच । ऋत्विजोहोमारंभात्पूर्वं त्रिराचम्यहोमंकुर्युः । एवमयुताहुतिहोमंसंपाद्यवास्तुलक्ष्मीमृत्युंजयादीनांहोमो यथेच्छयाहोमसंख्यात्नातात्कर्त्तव्यः । एवंहोमं





परिसमाप्यपूर्ववत्ग्रहाणांपूजाकर्त्तव्या । चंदनपुष्पादिपूजासंभारःपूर्वोक्तएव । सतिविभवेप्रत्येकपुरुषाहारपरिमितानिनैवेद्यानिभवंति । पूजांतेसुपात्रेजलपुष्पाक्षतफलादिनिधाय तत्पात्रंहस्ताभ्यामादाय । आदित्याद्याग्रहाः सर्वेपीठेयेत्रव्यवस्थिताः । तेगृह्णंतमयादत्तमिममर्घ्यंनमोनमः । इतिमंत्रेणार्घ्यंदत्वानमस्कारान्नचस्वस्वमंत्रैःकुर्यात् । मंत्रोयथा ॥ ॐनमोरथआदित्यदीप्यमानःस्वतेजसा । ज्योतिस्थःसर्वभूतेभ्यःससूर्यप्रीयतांमम ॥ द्विजराजमहातुंगताराापतिरनिंदितः । मासेमासेक्षयोवृद्धिःससोमःप्रीयतांमम । बालःकुमारकोपस्तु रक्तवर्णाःसुशोभनः ॥ अव्ययःपृथिवीपुत्रःसभौमःप्रीयतांमम ॥ सोमपुत्रोबुधःसौम्योबुधोनामग्रहाग्रहः । आदित्यपथगोयस्तुसबुधःप्रीयतांमम ॥ बृहस्पतिर्बृहत्तेजोबृहद्बुद्धिबृहद्यशः । सुराणांचगुरुर्यस्तुसगुरुःप्रीयतांमम ॥ असुराणांगुरुर्यस्तुग्रहाणांपरमागतिः । शुक्लवर्णःशुक्लदीप्तिःसशुक्रःप्रीयतांमम ॥ शनैश्चरःशनैश्चारि । उग्ररूपोरवेःसुतः । कृष्णवर्णः क्रूरदृष्टिःसशनिःप्रीयतांमम ॥ असुरःसिंहिकापुत्रोराहुश्चंद्रार्कमर्दनः । स्थापितस्तुनिमित्तार्थेसराहुःप्रीयतांमम ॥ आयांतुदेवःसगणःकेतुःकपोतवाहनः । सानुचरःसुमेधाश्चसकेतुःप्रीयतामम ॥ शंभुप्रभृतयं देवाःपीठेयेत्रमयार्चिता ॥ तेसर्वेशुभदाःसंतुसायुधाःसानुगाःसदा ॥ एवंनमस्कृत्यपूजापरिपूर्णतांप्रार्थयेत् ॥ आदित्यादिग्रहाणांस्थापित देवतानांपूजनकृतस्यविधेः सर्वपरिपूर्णमस्तु । एवंपूजांपरिसमाप्यआचार्योव्याहृतिचतुष्टयंजुहुयात् । ततःप्रकृतिवद्स्विष्टकृद्धोमः । ततःपूर्णाहुतिः ॥ स्रुचिस्रुवेणत्रिःकृत्वोघृतमादायचतुर्थेनस्रुवेणस्कंदनायोग्यांस्रुचंपूरयित्वातत्रतांबूलवस्त्रगंधपुष्पादिनिधायोत्थायमंत्रैःपूर्णाहुतिंजुहुयात् । मूर्द्धानंदिवइत्यादिऋक्त्रयस्यभरद्वाजस्त्रिष्टुबग्निःपूर्णाहुतिहोमेविनियोगः । मूर्द्धानंदिवइत्यादिऋक्त्रयांतेस्वाहाकारेणजुहुयात् । इदमग्नयेनममेतित्यागः । ततोऽभिषेकः । तत्राचार्यः । कुंडादैशान्यांअक्षतैःस्वस्तिकंविधायतदुपर्यासनंनिधायतत्रयजमानमुपवेश्यवामभागेपत्नींचोपवेश्य अन्यान्पुत्रपौत्रादींश्चोपवेश्यसकुटुंबंयजमानंअभ्यंगान्वयत्राहेमवस्त्रग्दामभूषिताश्चत्वारोद्विजावाद्यमंगलगीतकैः सहकलशस्थेनपात्रांतर गृहीतेनाभिषिंचेयुरीशानाभिमुखाः । तत्रशनोदेव्यापोहिष्ठीयाभिरित्यादयोमंत्राः । तत्रअभिषेकमंत्राणामृष्यादयः । शन्नःसिंधुद्वीपोगायत्र्यापः । आपोहिष्ठेतितिसृणांसिंधुद्वीपोगायत्र्यापः ।

उपास्माइत्यादिसामत्रयस्य असितकस्यपवैस्वानसागायत्रीसोमः । तरसमंदीत्पवसारोगायत्रीसोमः । एतोन्विंद्रेतितिस्र
णांतिरश्चनुष्टुविंद्रः । तमुष्टवामेतितिरश्चनुष्टुबिंद्रः । नकिइंद्रेतिवामदेवोगायत्रींद्रः । पवित्रंतेतितिसृणांपवित्रोजगती
सोमः ॥ अस्ययजमानस्यसकुंबस्यसर्वाभीष्टसिध्यर्थमभिषेकेविनियोगः । ततःकलशस्थाभिरद्भिःकुशाग्रगृहीतैरभिषिचे
युरेतैर्मंत्रैः । अन्यैचाभिषेकमंत्राःपरिशिष्टोक्ताः । तेयथा । सुरास्त्वामभिषिंचंतुब्रह्माविष्णुमहेश्वराः । वासुदेवोजग-
न्नाथस्तथासंकर्षणोविभुः । प्रद्युम्नोथानिरुद्धश्चभवंतुविभवायते ॥ आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥ वरुणः
पवनश्चैवधनाध्यक्षस्तथाशिवः । ब्रह्मणासहिताह्येतिदिक्पालाःपांतुवःसदा ॥ कीर्त्तिर्लक्ष्मीधृतिर्मेधापुष्टिश्रद्धाक्रियामतिः।
बुद्धिर्लज्जाबपुःशांतिर्मायोनिद्राचभावना । एतास्त्वामभिषिंचंतुपुष्टिःकांतिःक्षमातथा । आदित्यश्चंद्रमाभौमोबुधोजीवः
सितोऽर्कजः । ग्रहास्त्वामभिषिंचंतुराहुकेतुश्चपूजिता । देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ऋषयोमुनयोगावोदेव
मातरएवच । देवपत्न्योध्रुवानागादैत्याश्चाप्सरसांगणाः ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच । औषधानिचरत्ना
निकालस्यावयवाश्चये ॥ सरितःसागराःशैलातीर्थामिजलदानदाः । एतेस्त्वामभिषिंचंतुसर्वकामार्थसिद्धये ॥ एवम
भिषेकानंतरंसपत्नीकोयजमानःशुक्लांबरधरः शुक्लमाल्यानुलेपनवानभक्तियुक्तोनम्रः सनृत्विजानदक्षिणाभिपूजयेत ।
दक्षिणायथा । कपिलाधेनुरादित्याय। शंखंसोमाय। रक्तोधुरंधरोनड्वान्भौमाय । सुवर्णबुधाय । गुरवेपीतवासांसी।
श्वेताश्वः शुक्राय । कृष्णागौः शनैश्चराय । राहोछागः । केतुभ्योलोहं । कपिलाछागादीनांयत्रविषमंमूल्यंतत्रसुवर्ण
दानेनसांख्यंकर्त्तव्यं । उपरिसुवर्णमयिदक्षिणात्वेनदेयं । मृदूनिवस्त्राण्यपिदक्षिणात्वेनदेयानि । गुरुर्येनतुष्यतील्प
नेनाक्षिप्तशय्यादिदानमप्यत्रभवति ॥ अथदक्षिणादानविधिः ॥ तत्रआचार्यादिभ्योबरणक्रमेणदक्षिणादेया । कुंडात्प
श्चिमतःस्वयंप्राङ्मुखआसनेउपविश्य उदङ्मुखमाचार्यमुपवेश्य देशकालौसंकीर्त्त्यकृतस्यग्रहशांतिकर्मणः सांगतासिध्यर्थं
आचार्यादीन्यथा विभवंपूजयिष्ये इतिसंकल्प्य आचार्यपाद्यादिभिरुपचारै रभ्यर्च्य अन्येभ्योदक्षिणापेक्षया द्विगुणा
दक्षिणामुपकल्प्यकृतस्यनवग्रहशांतिकर्मणः सांगतासिध्यर्थं इदंसुवर्णमग्निदैवतंअमुकगोत्रायामुकशर्मणे आचार्यायअमुक





गोत्रोहममुकशर्मातुभ्यमहंसंप्रददे ॥ हिरण्यगर्भगर्भस्थं हेमबीजंविभावसोः । अनंतपुण्यफलदमतः शांतिप्रयच्छमेनमम ।
ततआचार्यः ॐप्रतिगृह्णामिस्वस्तीत्युक्तवाइदंकस्माआदित्यादिकामस्तुतिंपठेत् ॥ एवंब्रह्माणमुपवेश्यसंपूज्यदक्षिणां
दद्यादेवमेव । ब्रह्मन्तुभ्यमहमितिविशेषः । ततःसूर्यप्रीतयेजपहोमार्थंवृतायर्त्विजेदक्षिणांदद्यात् । सुवर्णदक्षिणा
दानपक्षेपूर्वोक्तएवदानमंत्रः। कपिलादानपक्षेतुकृतस्येत्याद्युक्त्वाइमांगांरुद्रदैवतांगोत्राद्याभाष्यसूर्यप्रीतयेतुभ्यमहंसंप्रददे।
कपिलेसर्वदेवानांपूजनीयासिरोहिणी । तीर्थदेवमयोयस्मादतःशांतिप्रयच्छमेनमम । गोदानप्रतिष्ठासिध्यर्थमिमादक्षिणा
तुभ्यमित्यादि । प्रत्यक्षगोदानपक्षेगोपुछेप्रतिग्रहः । एवंसोमप्रीतयेशंखंदद्यात् ॥ दानविधिः सर्वत्रसाधारणः ॥ इमं
शंखंवरुणदैवतंगोत्राद्याभाष्य । पुण्यस्त्वं शंखपुण्यानिमंगलानांचमंगलं ॥ विष्णुनाविधृतोनित्यमतःशांतिप्रपछमेनमम ॥
ततोदक्षिणा । एवंभौमप्रीतयेरक्तवृषभदानं । इदंवृषंरुद्रदैवतंभौमप्रीतयेइत्याद्युक्त्वा । धर्मस्त्वंवृषरूपेणजगदानंदकारक।
अष्टमूर्त्तेरधिष्टानमतःशांतिप्रयच्छमेनमम । बुधप्रीतयेसुवर्णंदद्यात् । तस्यदानमंत्राःपूर्वोक्तः । पीतंवासोबृहस्पतिप्रितये
दद्यात् ॥ तच्चबार्हस्पत्यं । वैष्णवंवा। पीतवासस्तुयस्माद्धिवासुदेवस्यवल्लभः। प्रदानंतस्यमेविष्णोरतःशांतिप्रयच्छमेनमम।
वस्त्रस्यदशांतेपरिधायवाप्रतिग्रहः । शुक्रायश्वेताश्वंदद्यात् । बरुणदैवतोश्वः । इममश्वंवरुणदैवतंतुभ्यमहमित्युचार्य ।
विष्णुस्त्वमश्वरूपेणयस्मादमृतसंभवः । चंद्रार्कवाहनोनित्यमतः शांतिप्रयच्छमेनमम । अश्वस्यकर्णेप्रतिग्रहःशनिप्रीतये
कृष्णांगोर्दद्यात् । साचरुद्रदैवता । यस्मात्वंसर्वयज्ञानामंगत्वेनव्यवस्थिता । गावोमूलंतुयज्ञानांमतःशांतिप्रयच्छमे ॥
राहुप्रीययेछागंदद्यात् । अग्निदैवत्यछागः । तस्यकर्णेप्रतिग्रहः । इमंछागमग्निदैवतमित्यादि । छागोदेवैः पुरासृष्टोयज्ञेषु
हविरुत्तमं । यानंविभावसोर्नित्यमतःशांतिंप्रयच्छमे ॥ केतुप्रीतयेलोहंदद्यात् । तदप्याग्नेयं । यस्मादायसकार्याणित्व
दधिनानिसर्वदा । लांगूलाद्यायुधादीनितस्माछांतिप्रयच्छमे ॥ सर्वेभ्योदक्षिणादानपक्षे । गवामंगेषुतिष्ठंतिभुवनानि
चतुर्दश । यस्मात्तस्माछिवंमेस्यादिहलोकेपरत्रच ॥ ॥ इतिगोदानमंत्रः ॥ शय्यादानपक्षे । यथाहिवासुदेवस्यशय्या
शून्यासदैवहि । तथाममाप्यशून्यास्तुदत्ताजन्मनिजन्मनिइतिशय्यादानमंत्रः ॥ लक्ष्मीनारायणाधिदैवताशय्यातामारुह्य

प्रतिग्रहः । यथारत्नेषुसर्वेषुसर्वेदेवाःप्रतिष्ठिताः । तथाशांतिप्रयच्छंतुरत्नदानेनमेसुराः । इतिरत्नदानमंत्रः । समुद्रजं रत्नवाख्णं । यथाभूमिप्रदानस्यकलानार्हंतिषोडशी । दानान्यन्यानिशांतिर्मेभूमिदानाद्भवंत्विह ।। इतिभूमिदानमंत्रः॥ ॥ गुरुर्यायेनतुष्यतीत्येनाक्षिप्तशय्यारत्नभूमिदानादिषुतस्यतस्यचमंत्राउक्ताः । ततोहोमसंकल्पः । पात्रांतरेसुसंप्रोक्षित मस्त्वित्यादिकृत्वा हस्तेजलमादाय । अस्मिन्यज्ञेयरुत्विग्भिः कृतोहोमःपृथक्पृथक् । यस्ययस्यचदेवस्ययद्यद्द्रव्यंयथा हुतं । यावद्यावचसंख्याकंमंत्रेणयेनयेनवः । सदेवःसपरिवारःप्रीयतांवरदोस्तुमेइतिपठित्वाजलमुत्सृजेत् । ततःपीठ स्थग्रहाणांविसर्जनं । उत्तिष्ठंनोजसेतिकुरुसुतिः काण्वरुषिः । गायत्रींछंदः । इंद्रोदेवता । ग्रहाणांविसर्जनेविनियोगः । उत्तिष्ठन्नोजसासहेतिमंत्रंपठित्वा । यांतुदेवगणःसर्वेंपूजामादायकृष्णतः । रुद्धिंचविंपुलांदत्वापुनरागमनायच । इति पठित्वा ग्रहान्विसर्जयेत् । ततोहोमकुंडस्यप्रागादिदिक्षुइंद्रादिदिकपतिभ्योबलिदानंकुर्यात् । तच्चमाषभक्तेनसदीपंकार्यं। सर्वत्रपात्रेमाषभक्तंकृत्वापार्श्वेदीपंसंस्थाप्यतंत्तंदेवंमंत्रेणसंपूज्यबलिर्निवेदनीयः । प्राच्यांत्रातारमिंद्रमितिइंद्रंचंदनादिभिः संपूज्यहस्तेजलमादायइंद्राय सांगायसायुधायसपरिवारायसवाहनाये ममाषभक्तबलिंसमर्पयामि । इत्युक्त्वाजलमुत्सृजेत्। ततोभोइंद्रंदिशंरक्षबलिंभक्षअस्ययजमानस्यायुः कर्त्ताक्षेमकर्त्ताशांतिकर्त्तापुष्टिकर्त्ताभव । एवंसर्वत्रबलिदानांतेवक्तव्यं । ततःआग्नेय्यामग्निस्तिग्मेनेत्यग्निंसंपूज्य बलिमुपनीयअग्नयेसांगायेत्यादि । भोअग्नेदिशमित्यादि । ततोदक्षिणस्यांनाके सुपर्णमितियमंसंपूज्य यमायसांगायभोयमदिशं० । ततोनीरुतिकोणेवेत्थाहीतिनिर्रुतिसंपूज्य निरुतयेसांगायसपरि० भोनिर्रुतेदिशंरक्ष० । ततःपश्चिमेयदाकदेतिवरुणंसंपूज्य,वरुणसांगाये० । भोवरुणदिशं० ततोवायौवातआवात्विति वायुसंपूज्य वायवेसांगाये० भोवायोदिशं० ततउत्तरस्यांतवाहंसोमंसंपूज्य सोमायसांगाय० भोसोमदिशं०। ततऐशान्यां अभित्वाशूरेतिईशानंसंपूज्य ईशानायसांगाय० भोईशानदिशं० । ततइंद्रेशानयोर्मध्येप्रयिवंचेतिब्रह्माणंसंपूज्य ब्रह्मणे सांगायेत्यादि । भोब्रह्मन्दिशं० ततोनिर्रुतिवरुणयोर्मध्ये अतोदिवाअवंतुनइति अनंतंसंपूज्यअनंतायसांगायेत्यादि । भोअनंतदिशं रक्षेत्यादिसमानं । एवंबलिदानंकृत्वा तंत्रशेषंसमाप्तिंकुर्यात् । साचेत्थंव्याहृतित्रयहोमः । समिद्धंहुत्वा





देवसवितरितिपर्युक्षणं । अदितेनुमन्स्थाइत्यादिमंत्रैःप्रसेकः । ततःएषवर्हिषःकुशमुष्टिमादायेत्यादिनाप्रकारेणयज्ञ वास्तुकरणं । वसुभ्यःस्वाहेतिस्रुवेणाज्यांहुतिः । प्रदक्षिणागमनं । प्रणीतानिनयनं । पुनःपुरणं । समाचारात्सुसंप्रोक्षि तस्त्वित्यादिकृत्वा ब्रह्मणेपूर्णपात्रस्यदानं । कृतस्यास्यनवग्रहशांतिकर्मणः सांगतासिध्यर्थंब्रह्मणेपूर्णपात्रं दक्षिणातुभ्य महंसंप्रददेनमम । कृतस्यास्यनवग्रहशांतिकर्मणःसांगतासिध्यर्थंयथासंपन्नेनाइयंसंख्याकान्ब्राह्मणान्भोजनेनाहंतर्पयिष्ये उत्तमपक्षेग्रहाणांनवति ९० मध्यमपक्षेसप्तविंशति२७ अधमपक्षेनव९ अधिदेवादीनांउत्तमपक्षेद्विसप्तति ७२ मध्यमपक्षे चतुर्विंशति२४। अधमपक्षे३ समुदायेनोत्तमपक्षेद्विषष्ट्यधिकमेकशतं । मध्यमपक्षे५१ अधमपक्षेद्वादश१२। भूयसींदक्षिणा मित्यादिसंकल्पःकार्यः । एवंसंकल्पान्विधायकृतस्यकर्मणः परिपूर्णतांप्रार्थयेत् । अद्यपूर्वोचरितएवंग्रहगुणविशेषण विशिष्टायांतिथौयथाशक्त्यानवग्रहशांतिकर्मणः कृतस्यविप्रैर्यन्न्यूनातिरिक्तंतत्सर्वंश्रीमतां प्रसादात्परिपूर्णमस्तु । ततः ब्रह्मणोविसर्जनं । वामदेव्यजपः । कयानश्चित्रेत्रिमहावामदेवरुषिः । गायत्रीछंदः ॥ विश्वेदेवादेवताः शांत्यर्थेजपेविनि योगः । का८४याइतिपठित्वा चतुर्भिश्चंत्यग्निंप्रणम्ययथाविभवंब्राह्मणान्संपूज्य सुमृष्टान्नेनसंभोज्यदीनांधकृपणेभ्योयथा विभवमन्नादिदत्वा इष्टैर्बंधुभिश्चपरिवृतःस्वयंभुक्त्वाआत्मानंकृतार्थमन्वीत ॥ इतिश्रीविद्वन्मुकुटमाणिक्यनिराजितचरण कमणशुक्लश्रीविश्रामात्मजशिवरामविरचिता नवग्रहाणामयुतहोमात्मिकाशांतिपद्धतिःसमाप्ता ॥

अथात्रोपयुक्तंपरिशिष्टकाराभिप्रायेणकिंचिदुच्यते ॥ एवमुक्तप्रकारेणायुतहोमात्मकग्रहयज्ञकरणासमर्थेनविवाहादिषु निमित्तेषुअयनादिपुण्यकालेषुनित्येषुचशक्त्यनुसारेणन्यूनाहुतिभिरपिग्रहयज्ञः कर्त्तव्यस्तस्यचावस्यकत्वोक्तेः । अल्पधने नदुःस्थानस्थितग्रहस्य पीडोपशांत्यैएकस्यद्वयोस्त्रयांणांवा तत्तत्पूजाप्रकरणोक्तगंधादि समित्तिलादि होमदक्षिणाभिः शांतिःकार्या । तत्रदुस्थानस्थितस्यगुरोःशांतिःकार्या । साचकालातिक्रमेजायमानेविवाहोपनयनपोरादौकार्या। शांतिश्च पूर्वोक्तप्रकारेणपूजाजपहोमादक्षिणादिं द्वैगुण्येनकर्त्तव्यवहवः । असृतयंशक्तप्रकारेणाहोमादिद्वैगुण्येनचाष्टकलशीशांतिः कर्त्तव्येत्यन्ये । अतःप्राचीनपद्धतिकाराभिःप्रायेणात्रोच्यते ॥ पूजाहोमादिषुप्रागुक्तमेवसर्वंभवति ॥ ॥ अथबृहपति

शांतोविशेषोऽभिधीयते ॥ प्रधानसंकल्पेदेशकालौसंकीर्त्यममसुतस्यवासुतायाः विवाहनिमित्तंउपनयननिमित्तंदुस्थान
स्थितस्यगुरोरानुकूल्यार्थंस्वशाखोक्तविधिनाबृहस्पतेः शांतिकर्माहंकरिष्येइतिसंकल्पः ॥ ततोमातृपूजाभ्युदयश्राद्धादि।
मातृपूजायांबृहस्पतेः शांतिकर्मांगत्वेनविहितगौर्यादिचतुर्दशमातृणामित्यादि। संकल्पे। नांदीश्राद्धेपीसंकल्पेप्येवमेव।
ऋत्विग्वरणंतत्रबृहस्पति शांत्याहंयक्ष्येतत्रमेत्वमाचार्योभव। ब्रह्माभव। ऋत्विग्भव। ऋत्विजोष्टौ। ततस्तेषांवरणांगा
चनं। स्वस्तिवाचनं। ब्राह्मणानांप्रार्थना। ततःआचार्यकर्मारंभंकुर्यात्। आदौपंचगव्येनप्रोक्षणं। पंचभूसंस्कारपूर्वकं
वरदानामाग्निंप्रतिष्ठाययामीत्यभिधायाग्नेस्थापनं। समिद्धोमः। भूजपपरिसमूहनेब्रह्मोपवेशनं। पात्रासादनादिसर्वं
प्राकृतं। पृषदाज्यस्योदनं ॥ तच्चदधिमिश्रंघृतंदुग्धमिश्रंवा। आसादनेइयान्विशेषः। बृहस्पतेत्वाजुष्टंनिर्वपामीतिगुरोः
पृथक्चरुः। ग्रहाणांचद्वितीयप्रकृतिवत्। ततःकुंडादुत्तरस्यांत्रिंशदंगुलांतरेचतुरस्रांहस्तमानांयतुरंगुलोच्चावेदिंनिर्माय।
तत्राहतवस्त्रमास्तीर्यतदुपरिदीर्घचतुरस्रंमंडलंकृत्वा शक्त्यानुसारेणसुवर्णनिर्मितांगुरोमूर्त्तिअग्न्युत्तारणपूर्वकंतांप्रतिमातंडुल
पुंजोपरिसंस्थाप्य तत्रवाक्यतिमावाहयेत्पूर्ववत्। पूर्वस्यांप्रजापतिरावाहयेस्थापने। मध्येचइंद्रस्यशिखिनामकस्याग्ने
श्वस्थापनंउत्तरफाल्गुनाभिधनक्षत्रस्य। एवंसंस्थाप्यकुंडादैशान्यांयथावद्ग्रहाणांस्थापनं ॥ ततोबृहस्पतेपीठेपरितोष्ट
दिक्षुयथाविधिनाअष्टोकलशःस्थापनीयाः। ततस्तेषुप्रागादिक्रमेणवक्ष्यमाणावस्तूनांप्रक्षेपः। यथागोरोचनाहरितालमः
शिलाप्रियंगुसहदेवीतिपंचैताप्रथमेकलशेः अग्निमीळेतिप्रक्षेपमंत्रः। यवव्रीहिःप्रियंगुसर्षपगोरोचनायष्टी मधुशतावरी
जातीपत्राणीत्यष्टौदक्षिणकलशे। तत्रइषेत्वेतियजुः शाखोपःप्रक्षेपमंत्रः। चंदनकुंदपुष्पं बालकंपद्मकंचैवतद्वस्तुचतुष्टयमग्न
आयाहीतिमंत्रेणपश्चिमकलशेप्रक्षिपेत्। अश्वगंधामूरमांसीहरिद्राचेतिस्रतितिस्रऔषध्यः शन्नोदेवीतिमंत्रेणउत्तरकलशे
प्रक्षिपेत्। अरिष्टकाःकाकजंघालक्ष्मणाचक्रांकाराताश्वतस्रो ब्रह्मजज्ञानमितिईशानकुंभेप्रक्षिपेत्। वचांदारुहरिद्राप्रपा
मार्गभृंगराजेतिचतस्रआग्नेयकुंभेइदंविष्णुरितिप्रक्षिपेत्। कुंदरुपिप्पलीमूलधात्रीवेतितिस्रोनिरृतिकुंभेआपोराजेतिप्रक्षि
पेत्। कुंकुमरक्तचंदनमरूवकमितिवायव्यकुंभेगायत्र्याप्रक्षिपेत्। ततोग्रहपीठादैशान्यांस्थापितकुंभेपूर्वोक्तंसर्वंप्रक्षिप्य





वरुणमावाह्यपूजयेत्। अथाष्टकलशानामभिमंत्रणं। रुद्रसंहिताराक्षोघ्नानिसामानिअप्रतिरथं। एतानिसामानिसमुदायेन
कलशाभिमंत्रणेज्ञेयानि। अथप्रागादिक्रमेणपृथगाभिमंत्रणेसामानि। गिर्वणःपाहिनःसुतं ।१। इम॰स्तो२३४माम्।
इतिसाम२। इम॰स्तोममर्हतेतिऋकूत्रयं। सखायआइतिसामपंचकात्मकोवर्गः। त्वावारभिद्रं। श्रीरसिमयिरमस्व। एवा
त्रिपूर्वकुंभे। य॰रक्षंति। नाकेसुपर्णं। अभित्वपूर्वपीठे॥ एतानियाम्येकुंभेयदाकदात्रीणि ॥ आनोमित्रावरुणाघृतवतीद्वे।
आयुश्चक्षुर्ज्योतिः। एतानिपश्चिमकुंभे। तक्षह॰सोवर्मःसामंपंचकात्मकः। इदा॰द्मे। सोमः। पवतेवर्गः सामचतु
ष्टयात्मकः। आप्यायस्वसमेतुते। एतान्युत्तरकलशे। अभित्वाशूरइतिद्वे। भद्रंभाद्राम्। एतानैशानकुंभे। भद्रो४नः।
ओम्नायि। आग्नाई२३४वा। उतिष्ट॰३मा। आगंता। आग्नातु२३४वा। तिग्मेना।३शो। इतिद्वे। इतिआग्नेयकुंभे।
वेत्थाहिनिर्ऋतीनां। आभित्वासूरनोनुमोवा। इतिनिर्ऋतिकुंभे। वातआवातु। प्राणाशिशुरितिवर्गः। एतानिवायव्यकुंभे।
एवंकलशाभिमंत्रणंकृत्वाप्रतिष्ठांकुर्यात्। प्रतिष्ठामंत्रौपठित्वा। अद्यसमस्तपुण्यकालावयवयोगेषुएवंग्रहःतिथौआदित्या
द्याग्रहाः सबृहस्पतिकाःस्वस्वपीठस्थिताः सकलशाःसुप्रतिष्ठावरदाभवंतु। ततःपूजा। तत्रपूर्वंगुरोःपूजाः। अद्येत्यादि
तिथौ अस्यकुमारस्यकुमार्यावादुस्थानस्थित बृहस्पतिजनितपीडोपशांतयेबृहस्पतेः पूजामहंकरिष्ये। इतिसंकल्प्य उक्त
चंदनपुष्पधूपदिपंनैवेद्यफलादिभिःसंपूज्यकलशेषुवरुणंचसंपूज्यग्रहपीठेग्रहान यथावत्संपूज्यतत्रसकलशेपिवरुणंपूजयेत्।
ततश्चरुद्रयेतिश्रुताभिधाराद्याज्यभागांतंप्राकृतंसर्वंकर्तव्यं। तत्रपृषदाज्यस्यसंयूपनोत्यवनेकृत्वा। आज्यस्थाल्याउत्तर
स्यांपृषदाज्यस्यासादनं। आज्यसंस्कारानंतरंपृषदाज्यस्यसंस्कारः। प्रकृतिवदाज्यभागौहुत्वा स्रुचिस्रुवेणचतुर्गृहीतंपृष
दाज्यमादायसोमंराजानमित्यृचाजुहुयात्। इदंबृहस्पतयेनमम। पुनश्चतुर्गृहीतमादाय। यशोमाद्यावापृथिवीइतिजुहु-
यात्। इदमिंद्रायबृहस्पतिभ्यांनमम। इदंबृहस्पतिभ्यामितिवा। एकंकयानश्चित्रेतितृतीयां। कस्त्वासत्योमदेतिचतुर्थी।
अभीषुणइतिपंचमी। बृहस्पतेपरिदीयारथेनेतिषष्टी। इंद्रआसनेता। इतिसप्तमी। स्वस्तिनइंद्रेत्यष्टमी। इदंबृहस्पतयेन
ममेतिसर्वत्रत्यागः। एवमष्टावाहुतःपृषदाज्येनहुत्वा। बृहस्पतिइतिचरुणाचतस्रआहुतयोहोतव्याःप्रकृतिवत्। तत्रमंत्रः।

उपत्वाजामयेतिप्रथमा । तवेंदिंद्रावमंवस्त्विवतिद्वितीया । अग्निंहोतारंमन्यइतितृतीया । प्रजापतेनत्वदेतान्यइतिचतुर्थी इदंबृहस्पतयेनममेतिसर्वत्रत्यागः । ततोऽभिषेकः । बृहस्पतिपीठात्पश्चिमता । स्वस्तिकंविधायतदुपरिकृष्णाजिनमास्तीर्य तत्रकन्यांबटुकंवाउपवेश्यतस्य मूर्ध्निसफलामौदुंबरशाखांसंन्यस्य आचार्योभिषिंचेत्प्रथमं । तत्रपूर्वकलशाष्टकस्थंजल पात्रांतरक्रमेणादाय बृहस्पतेपरिदीयारथेनेति मंत्रेणाष्टोत्तरशतंतज्जलमभिमंत्र्यस्यकुमारस्य कुमार्यावाद्गृस्थानस्थितबृह-स्पतिकृतपीडोपशांतयेअभिषेकमहंकरिष्य इत्यभिधायअभिषेकलिंगकैर्मंत्रैशन्नोदेव्यापोहिष्ठीयाभिरित्यादिभि । रभि षेकःकार्य। ततोरूग्भिः पृथक्पृथक्स्वस्वकलशेनाभिषेकःकार्यं। पूर्वकुंभमादाय अभित्वा शूरेतिमंत्रेणाभिषेकः । त्रातार मिंद्रेतिदक्षिणकलशेन । एतोन्विद्रस्तवामेतिपश्चिमकलशेन । उपास्मैगायेत्यादिनवः । तरत्समंदीतिचतस्रः । एतात्रूच उत्तरकलशे । अभित्वाशूरइतीशानकुंभे । अग्निस्तिग्मेनेत्याग्नेयकुंभे । वेत्थाहीतिनिर्ऋतिकुंभे । वातआवात्वितिवायव्य कुंभे । सहस्राक्षं० भगंतेवरुणे० यत्तेकेशेषु० रुद्रागिरयोनद्योमुनयोश्चपतिव्रताः । दौर्भाग्यंघ्नतुतेसर्वेशांतियच्छंतुसर्वदा । एवमभिषेकेणस्नापयित्वा । धौतेशुद्धेवाससीपरिधापयेत् । ततोग्रहाणांचरुहोमः । ग्रहमंत्रैराज्याहुतयः ततःसमिद्धो मादिलक्ष्मीहोमोतंकृत्वा बृहस्पतेग्रहाणांचपूजा । पीतवस्त्रेणराच्छादनं। बृहस्पतिर्बृहत्तेजइतिप्रार्थना। तत्रपूजांतेसंस्कार्य हस्तेनार्घदापयेत् । पात्रेदध्यक्षतफलपुष्पाक्षतादिकृत्वाहस्ताभ्यांतत्पात्रमादाय । रूपंदेहिजयंदेहिभतारंधर्मवत्सलं । पुत्रानदेहिधनंदेहिसर्वान्कामांश्चदेहिमे इत्यर्घंदत्वाप्रणमेत् । ग्रहाणांचततोयथावत्पूजा। ततःप्रायश्चित्तंहुत्वा चरुद्वयमेकी कृत्यस्विष्टकृद्धुत्वा पूर्णाहुत्यादिबलिदानांतंपूर्ववत कृत्वातंत्रशेषंसमापयेत् । आचार्यायससुवर्णपीतवस्त्रयुगंदक्षिणांदत्वा आचार्यंब्राह्मणांश्चप्रणम्यविसर्जयेत् ॥ ॥ इतिशांतिचिंतामणौबृहस्पतिशांतिः ॥ ॥ प्रणम्यतातंविश्रामंविघ्नेशंजग दंबिकां ॥ लक्षहोमंविधिंवक्ष्येसामगानांहितायवै ॥ अथलक्षहोमप्रयोगः । तत्रलक्षहोमेमंडपकुंडादियथोक्तमेवसर्व नियमेनकर्त्तव्यंकाम्यत्वात् । मंडपस्थमध्येकुंडंचतुर्हस्तंसमचतुरस्रंमेखलायोनियुक्तंयथोक्तंकार्यं । तच्चतुर्हस्तमष्टाविंश चत्वारिंशदंगुलैश्चतुर्हस्तंकुंडंभवती तिवाजपेयिप्रभृतयःआहु । तत्समचतुरस्रमेवभवति । तस्यचतुर्विंशोंगुलं । तदंगुल





मानेनमेखल्यंकतयोन्यादिसर्वंकार्यं । कुंडादैशान्यांग्रहवेदि । कुंडवेद्योस्त्रिंशांगुलमंतरंभवति । साचषट्त्रिंशदंगुलवि स्तृता अष्टादशांगुलोच्चावप्रत्रयुताकार्या । तत्रपंचांगुलविस्तृतस्तावद्रुजितःप्रथमोवप्रः । अंगुलोच्छ्रायोद्व्यंगुलबिस्तृतो द्वितीयः । तथैवतृतीयः । उपरिदशांगुलोच्छिताभित्तिः । अत्रकेचिदाग्नेय्यांविनायकपीठंहस्तमात्रं । नैरृत्यांवास्तुपीठं चतुर्विंशदंगुल मित्येवंपीठद्वयमाहु अत्रमंडपस्य चतुर्दिक्षुद्वारतोरणशाखामस्तके प्रागादिषुक्रमेण शंखचक्रागदांबुजानि कर्त्तव्यानि । तत्रशंखादीनांप्रमाणंतुपंचहस्तमि ततोरणस्तंभश्चेद्दगांगुलानिदैर्घ्येषट्हस्तपक्षेद्वादशंगुलानि । सप्तहस्त पक्षेचतुर्दशांगुलानीग्रंथकाराहुः । विस्तारादिकंतुर्यांशेन । वेशश्चशूलवत् । मंडपोपिचतुर्दशषोडशाष्टादशहस्तान्यतमाने नकार्यः । तन्यूनमानः । कुंडस्यग्रहपीठस्यवासमावेशात् । सचयथाशास्त्रंषोडशस्तंभद्वारतोरणध्वजपताकावस्त्रफल पुष्पादिभिःशोभनःकार्यः । ग्रहवेदेरुपरिशोभनोवितानःस्थापनीयः । ऋत्विक्संख्यातुपूर्वोक्तैवाऽत्रज्ञेया। यदाल्पकारोन समाप्तिरिष्टातदाबहूर्त्विक्पक्षःस्वोकर्त्तव्यः । बहुकालेनचेतदाहीनख्येति । अत्राथतहोमापेक्षयासर्वदशगुणंपूजाहोम दक्षिणादानानिकंकर्त्तव्यं । इत्युपयुक्तोविचारः ॥ अथकर्मक्रमः ॥ तत्रचांद्रतारानुकूलेज्योतिर्विदादिष्टेशुभेह्निश्मश्रुकर्म कारयित्वा तिलामलकादिनामलापकर्षणस्नानंकृत्वा ॥ आचम्य अहत्वस्त्रद्वयंधृत्वा । कृतमांगलिकःकृतनित्यक्रियः सुवर्णरजतकुशपवित्रान्वितदक्षिणकरोवामहस्त घृतबहुकुशेगोमयोपलिप्त भूमौन्यस्तोदगग्रकुशोत्तर यज्ञियदार्वासनेप्राङ् मुखउपविश्यकर्मांगाचमनंकृत्वा गुरुगणपतिपरमेश्वरानमस्कृत्य सुमुखश्चैकदतश्चेत्यादिपठित्वा ताम्रमयपात्रेकुशयवजल पुष्पादीन्कृत्वा तत्पात्रमादायेदेशकालंचसंकीर्त्य अमुकफलकामोहंगोभिलोक्तग्रहयज्ञप्रकृतिकं लक्षहोमाख्यंकर्माहंकरिष्ये इतित्यभिधायजलंभुम्युत्सृजेत् । एवंसंकल्पंकृत्वाविनायकंपूजयेत् ॥ पूजाविधिः प्रागुक्तएव। संकल्पेविशेषः। प्रारीप्स्य माणलक्षहोमकर्मणोनिर्विघ्नपरिसमाप्ति कामोविनायकपूजामहंकरिष्ये इतिसंकल्प । ततोमातृपूजातत्रत्संकल्पेलक्षहोम कर्मांगत्वेनविहितगौर्यादिचतुर्दशमातृणां । वसोद्धारासहितानांपूजामहंकरिष्यइति ॥ ततःआयुःशांतिजपः । वैश्वदेवः। तदनुषड्दैवतंवृद्धिश्राद्धं । तत्रगोत्राणांपितृपितामहप्रपितामहानांअमुकामुकशर्मणां मातामहप्रमातामहवृद्धप्रमातामहानां

अमुकामुकेत्याद्याभाष्य लक्षहोमकर्मणोंगतयाविहितं नांदीश्राद्धंभार्वणद्वयं विश्वेदेवापूर्वकंमर्घपिंडसहितं युष्मदनुज्ञया अहंकरिष्येइतिसंकल्पः । ततोयथावद्वृद्धिश्राद्धंकृत्वा ऋत्विजांवरणं । ततउदङ्मुखं स्वीनधिकान्वाब्राह्मणांश्चंदनपुष्प वस्त्रदक्षिणाभिःसंपूज्यस्तुतिनमस्कारादिभिः परितोष्यलक्षहोमकर्मणाहं यक्ष्येतत्रभवंतोमामनुज्ञापयंतुइतितान्बद्धांजलिः प्रार्थयेत । ततस्तेचनिर्विघ्नेनायंशुभोलक्षहोमाख्योयज्ञः क्रियतांइतिसहर्षंब्रूयुः । एतच्चप्रधानसंकल्पात्पूर्वंकर्तव्यमिति केचिदाहुः । ततोऋत्विग्वरणं । तत्रप्रागग्रंकुशोत्तरमासनद्वयं निधायोदगग्रासनेस्वयं प्राङ्मुखउपविश्य आचम्यप्राणाना यम्यसमाचारादर्घंकुर्यात् ॥ मृत्पात्रेपुष्पाक्षतदध्युदकानिपुंगीफलं द्रव्यंचनिधायसजातीयेनपात्रांतरेणपिधाय रक्तसूत्रेण वेष्टयस्वासनात्पश्चिमत ऊर्ध्वंस्थितस्ययजमानस्यहस्तेतदर्घमाचार्योदद्यात् । ततंस्तत्रैवस्थितोयजमानोऽर्घं हस्तोद्विजान् प्रार्थयेत् । सोमसामादिपठित्वा देशकालौसंकीर्त्य । पावनाःसर्ववर्णानांब्राह्मणाब्रह्मरूपिणः । अनुगृह्णंतुमामत्रलक्ष होमाख्यकर्मणि । स्वस्वकर्मरतानित्यंवेदशास्त्रार्थकोविदाः । श्रोत्रियाःसत्यवाचश्चदेवध्यानरताःसदा । यद्वाक्यामृत संसिक्तावृद्धियांतिनरद्रुमाः । अंमीकुर्वंतुकर्मैतत्कल्पद्रुमसमाशिषः । यथोक्तनियमैर्युक्तामंत्रार्थेस्थिरबुद्धयः । यत्कृपालो चनात्सर्वाऋद्धयोवृद्धिमाप्नुयुः । आयुरारोग्यपुत्रादिसुखःश्रीप्राप्तयेमम । आपद्विघ्नभयारिष्टशत्रुबुद्धिक्षयायचऽविशेष काम्यहोमेनसहितंसमिदादिभिः । लक्षहोमाभिधंकर्मकर्तुंयूयंप्रसीदत । स्वागतंवोद्विजश्रेष्ठामदनुग्रहकारकाः । इदमर्घ मिदंपाद्यंभवद्भिःप्रतिगृह्यतां । इतिब्राह्मणान्संप्रार्थ्य ब्राह्मणानामग्रतोर्घंस्थापयेत् । ततःप्राङ्मुखमाचार्यमुपवेश्यस्वय मुदङ्मुखउपविश्यअक्षतानादाय आचार्यस्यदक्षिणंजान्वालभ्य अमुकगोत्रंअमुकप्रवरंसामवेदस्य कौथुमीशाखाध्यायिनं। अमुकशर्माणंलक्षहोमकर्मणाअहंयक्ष्ये । तत्रत्वामहमाचार्यंवृणे । वृतोस्मीतिब्रूयात् । एवंमानुषंवरणंकृत्वादैवंवरणंकुर्यात्॥ आवाहयामिदेवेशमाचार्यंयज्ञकारिणं । पुराणन्यायमीमांसाधर्मज्ञा । स्त्रार्थपारगं । आचार्यस्तुयथास्वर्गेशक्रादीनांबृह- स्पतिः । तथात्वंममयज्ञेस्मिन्नाचार्योभवसुव्रत । आचार्यएतत्तेपाद्यं । पादावनेजनं । पादप्रक्षालनं । एताह्योर्घं । इद मत्रचंदनंपुष्पं । सर्वंसर्वत्र । ततःस्वयंप्राङ्मुखोपविष्ट उङ्मुखांन्सर्वान्वृणुयात् । उङ्मुखंब्रह्माणंमुपवेश्यअक्षतहस्तो





दक्षिणंजान्वालभ्यगोत्राद्याभाष्यलक्षहोमकर्मणाहंयक्ष्ये । तत्रत्वामहंब्रह्माणंवृणे । प्रतिवचनानंतरं । आवाहयामिदेवेशं ब्रह्माणंकमलोद्भवंचतुर्वेदसमायुक्तंसर्वसिद्धांतकोविदं । यथाचतुर्मुखोब्रह्मासर्ववेदविशारदा । तथात्वंममयज्ञेस्मिन्ब्रह्मा भवद्विजोत्तम । ब्रह्मन्नेतत्तेपाद्यमित्यादि । ततोहोमार्थमृत्विग्जान्वृणुयात् । गोत्राद्याभाष्यलक्ष्यहोमकर्मणाहंयक्ष्ये । तत्र होमार्थमृत्विजंत्वामहंवृणे । ऋत्विक्एवतेपाद्यमित्यादि । ऋत्विजश्चत्वारः । अष्टौवा । दशवा । शीघ्रकार्येषोडशवा । सर्वत्रब्रह्मा आचार्यश्च । ततःसमाचाराद्वेदचतुष्टयस्य पारायणपाठकानांवरणं । गोत्राद्याभाष्यलक्षहोमकर्मणाहंयक्ष्येतत्र पूर्वद्वारेऋग्वेदपारायणपाठार्थंत्वामहंवृणे । प्रतिवचनानंतरं । ऋग्वेदःपद्मपत्राक्षोगायत्रः सोमदैवतःअत्रिगोत्रस्तुविप्रेंद्र ऋत्विक्त्वंमेमखेभव । पारायणपाठक्एतत्तेपाद्यमित्यादि । ततोन्यंऋग्वेदिनमुपवेश्यगोत्राद्याभाष्यपूर्वद्वारेद्वारपालं वृणे । द्वारपालएतत्तेपाद्यमित्यादि । ततोयजुर्वेदिनमुपवेश्यगोत्राद्युक्त्वा दक्षिणद्वारयजुर्वेदपारायणपाठार्थंत्वामहंवृणे। कातराक्षोयजुर्वेदस्त्रैष्टुभोरुद्रदैवतः । काश्यपेयस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभवतत:पाद्यादि ॥ अन्यंयजु:शाखीयमुपवेश्य दक्षिणद्वारेद्वारपालएतत्तेपाद्यमित्यादि । ततःसामवेदिनमुपवेश्यपश्चिमद्वारेसामवेदपारायणपाठार्थेत्वामहं० सामवेदस्तु पिंगाक्षोजगतःशक्रदैवतः भारद्वाजस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभव । पारायणपाठकएतत्ते। पश्चिमद्वारेद्वारपालंवृणेइत्यादि ततोऽथर्ववेदिनमुपवेश्य उत्तरद्वारेअथर्ववेदपारायण पाठार्थंत्वामहमित्यादि । बृहन्नेत्रोऽथर्ववेदोऽनुष्टुभोरुद्रदैवतः । वैशंपायनविप्रेंद्रऋत्विक्त्वंमेमखेभव । ततःपाद्यादि । उत्तरद्वारेद्वारपालंवृणे । पाद्यादि । ततोगणपतिमंत्रजपार्थं । चंडीपाठार्थं। मृत्युंजयमंत्रजपार्थं। एवंनिर्विघ्नार्थमेतानपिवृणुयात् । इदमप्याचारप्राप्तं । ततःसदस्यंवृणुयात् । गोत्राद्या भाष्यलक्षहोमकर्मणाहंयक्ष्ये तत्रसर्वकर्मणामुपद्रष्टात्वंभवेति । एवंब्राह्मणान्वृत्वाद्विजचरणक्षालनजलंस्वशिरसिभृत्वा स्वचरणौसमाचारात् प्रक्षाल्याचम्यवरणक्रमेण अर्हणीयशाखानुसारेण सर्वान्मधुपर्केणार्चयेत् । आचम्यप्राणानायम्य देशकालौसंकीर्त्यअस्मिन् लक्षहोमकर्मणिवरणांगं आचार्यप्रभृतीनामृत्विजांमधुपर्केणार्चनमहंकरिष्ये । इतिसंकल्प्य अर्च्यशास्त्रोक्तमधुपर्कविधिनासमर्च्यसंकल्पंकुर्यात्. । सुसंप्रोक्षितमित्यादिकृत्वा । यथादत्तंगांधर्वंगंधं वानस्पत्यानि

पुष्पाणिसौर्यानिकांस्यपात्राणि रौद्राणिताम्रपात्राणिवार्हस्पत्यानिवासांसि प्रजापत्यान्युपवीतानिआग्नेयः कुंडलमुद्रिकाः
वरणांगमधुपर्कसिध्यर्थं वरणांगार्चनसमृध्यर्थंवा आचार्यप्रमुखेभ्यऋत्विग्भ्योहंसंप्रददेनमम । अग्न्यारभ्यासमाप्ते॰ प्रति
दिनमृत्विग्भ्योयथासंपन्नेनान्नेनभोजनमहंदास्ये एवंमृत्विजांमधुपर्कविधिनार्चनासंभवे वरणश्राद्धविधिनासर्वानर्चयेत।
ऋत्विजांवरणांगार्चनविधेः सर्वपरिपूर्णमस्तु । इतिऋत्विग्वरणं ततोग्रहशांतिप्रकरणोक्तप्रकारेणस्वस्तिवाचनं । तत्र
संकल्पेविशेषः देशकालौसंकीर्त्यलक्षहोमकर्मणांगतयाविहितं पुण्याहवाचनमहंकरिष्ये । इतिसंकल्प्य । स्वस्तिवाचनं।
तदनंतरंमभिषेकः । कौतुकबंधः । ततःफलहस्तोयजमानऋत्विजान्प्रार्थयेत् ब्राह्मणाःसंतुमेशांताःपापात्पांतुसमाहिताः
देवानांचैवदा तारःपातारःसर्वदेहिनां । जपयज्ञैस्तथाहोमैदानैश्चविविधैःपुनः । देवानांचपितृणांचतृप्त्यर्थंयाजकाःकृताः।
येषांदेहेस्थितादेवाःपावयंतिजगत्त्रयं। रक्षंतुसततंतेमांहोमयज्ञेव्यवस्थिताः । अक्रोधनाःशौचपराःसततंब्रह्मचारिणः ।
ममापिनियमाविप्राभवंतुभवतामपि ।,अस्ययागस्यनिष्पत्त्यैभवंतोभ्यर्थितामया । सुप्रसादंप्रकर्त्तव्योहोमोयंविधिपूर्वकं ।
एवंद्विजान्संप्राथ्र्यफलमग्रेनिधायब्राह्मणान्प्रणमेत् । अथमंडपसकलीकरणं तत्रयजमानोमंडपस्यपश्चिमद्वारेप्राङ्मुख
उपविश्यगुरुगणपतिग्रहान्नमस्कृत्यदेशकालौसंकीर्त्य अस्मिन्लक्षहोमकर्मणिविहितमंडपस्तंभद्वारेतोरणशंखादिदिक्पाल
ध्वजपताकानांस्थापनप्रतिष्ठापूजनमहंकरिष्ये । इतिसंकल्प्यमध्यवेद्यामाग्नेयादि स्तंभचतुष्टयेषुतथैवबाह्येपिआग्नेयादि
प्रादक्षिण्येनद्वादशस्तंभेषुस्योनापृथिवीइतिखननं ।। सिंचेतिनमसेतिजलासेकः । दधिक्राव्णइतिदधिप्रक्षेपः । धानावंत
मितियवान् । आवोराजेतिहिरण्यं । उभेयदिंद्रेइतिदूर्वा । ऊर्ध्वऊषुणइतिस्तंभस्योच्छ्रयणं । अभिवस्त्रेतिसूत्रबंधनं ।
एवंप्रादक्षिण्येनाग्नेयादिमध्यस्तंभचतुष्टयेबाह्येपि । आग्नेयाद्येवप्रादक्षिण्येनद्वादशस्तंभेषुसर्वत्रकार्यं । पूर्वसंपादित
मंडपस्यमंत्रैरेवस्थापनमात्रं कर्त्तव्यंमंत्राणां संस्कारत्वात । सुभद्रंस्थापयामित्यादिनामभिः स्थापनमितिकेचिदाहुःसुभद्रं
विजयंकृष्णंश्रीमंतंमंगलंगुणं । जयंधनदकल्याणीशुभशांतंमनोरमं । ऋद्धिसिद्धिविचित्रंचदिव्यरूपमनुक्रमात् । मंडप
स्तंभनामानिषोडशैतान्यसंशयमितिसंग्रहोक्तेः । एवंषोडशस्तंभान्संस्थाप्य अग्निमीलेतेमंत्रेणबहुमंगलनामानंपूर्वद्वारे





स्थापयामि । इषेत्वेतिमंत्रेणधर्मिष्टनामानंदक्षिणद्वारंसंस्थापयामि । अग्नआयाहिवीतयइतिजयसाधनाभिधं पश्चिमद्वारं
स्थापयामि । शन्नोदेवीरितिकल्याणाभिधमुत्तरद्वारंस्थापयामि । एवंद्वाराणिसंस्थाप्यएभिरेवमंत्रैःप्रागादिचतुर्दिक्षुद्वारा
द्बहिहस्तमात्रोपरितोरणानिस्थापयेत् । सुदृढनामकमाश्वत्थतोरणंस्थापयामि । मंगलाख्यंवैष्णवंशंखंस्थापयामि इति
पूर्वस्यां । विकटामौदुबरंत्तोरणंस्थापयामि । शत्रुघ्नरौद्रंचक्रंस्थापयामि । इतिदक्षिणे । भीमाख्यंप्लाक्षंतोरणंस्थापयामि ।
पुत्रप्रदांभिधांब्रह्मदैवतांगदांस्थापयामि । इतिपश्चिमे । सुप्रभाख्यंवाटंतोरणंस्थापयामि । उत्तमाभिधंसौम्यंपद्मंस्थाप-
यामि । इतिउत्तरस्यांएवंद्वाराणितोरणानिचसंस्थाप्य ऋत्विग्भिराचार्येणसहितोऽर्घहस्तोयजमानः शांतिसूक्तंपठन्पश्चिम
द्वारेस्थित्वा चतुर्भुजां शुक्लवर्णांकूर्मपृष्ठोपरिस्थितां पद्मशंखचक्रशूलधरां सुप्रसन्नांपृथिवीध्यात्वा आगच्छसर्वकल्याणी
वसुधेलोकधारिणि । पृथिवीब्रह्मदत्तासिकाश्यपेनाभिवंदिताः । उध्धृतासिवराहेणकृष्णेनशतबाहुना । दंष्ट्राग्रेलीलया
देवियज्ञार्थंप्रणमाम्यहं । इतिमंत्राभ्यामर्घंदत्वामंडपंप्रविशेत् । आचार्यस्ततोदेवमयंमात्मानंविभाव्यसर्षपाक्षतानादाय
अग्नेरक्षा । अग्नेयुंक्ष्वेतिमंत्रौपठित्वा । यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वदा । स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु ।
अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं । सर्वेषामविरोधेनब्रह्मकर्मसमारभेत् । भूतप्रेतपिशाचाद्याअपक्रामंतुराक्षसाः ।
स्थानादस्माद्व्रजंत्यन्यत्स्वीकरोमिभुवंत्विमां । अपःसर्पंतुतेभूतायेभूताभुविसंस्थिताः । येभूताविघ्नकर्त्तारस्तेनश्यंतुशिवा
ज्ञया । एभिर्मंत्रैरभिमंत्रिताक्षतप्रक्षेपेणविघ्नानुत्सादयेत् ।। ततोमंडपवेदीनांप्रोक्षणार्थंताम्रवर्जितेपात्रेपंचगव्यंकुर्यात ।
ताम्रायागोमूत्रंगायत्र्याकुर्यात् श्वेतायागोमयंगावश्चिदिति । कपिलायाःपयश्चक्रंयदस्येति । नीलायादधिक्राव्णइति ।
कृष्णायाघृतंघृतवतीइति । तत्तद्वर्णाभावेअन्यासांग्राह्यं । एवंमंत्रैपात्रेपंचगव्यसंगृह्यगायत्र्यातदभिमंत्र्यकुशाग्रगृहीत
पंचगव्येनगायत्रींपठन् मंडपंकुंडंग्रहवेदींचप्रोक्षयेत् । ततःकुशोदकैरापोहिष्ठेत्यादिमंत्रैर्देवस्यत्वेतिमंत्रांतेभिषिंचामीत्य
भिधायप्रोक्षणंकार्यं । ततोमंडपसकलीकरणांगंवास्तोःपूजनं । मंडपस्यनिर्ऋतिकोणेप्राङ्मुखोयजमानउपविश्यआचम्य
प्राणानायम्य । देशकालौसंकीर्त्यमंडपस्य सकलीकरणांगंवास्तुपुरुषस्यपूजनमहंकरिष्ये । इतिसंकल्प्य वास्तुमंडलं

कुर्यात् । मंडपस्यनिर्ऋतिकोणेवास्तुस्थापनंवेदीकोणचतुष्केईशानादिशंकून्रोपयेत् । तत्रमंत्रः । विशंतुभूतलेनागालोक
पालाश्चसर्वतः । मंडपेस्मिन्प्रतिष्ठंतुआयुर्बलकराःसदा । ततस्तत्रबलिदानं । अग्निभ्योप्यथसर्पेभ्योयेचान्येत्रसमाश्रिताः।
तेभ्योरक्षकगंधर्वापुण्यमोदनमुत्तमं । ततस्तत्राचतुः षष्टिपदात्मकंवास्तोःपीठंकुर्यात् । प्रासादेचतुःषष्टिपदोवास्तुरुक्तः ।
मंडपस्यापिप्रासादसाम्य।दितिदेशान्मंडपेचतुःषष्टिपदएवभवतीतिप्राचीनग्रंथकाराः । तत्रपीठकरणप्रकारोयथा। वेद्यां
वस्त्रेवासुवर्णादिशलाकयाकुंकुमादिना । गदायशोवतीकांताविशालाप्राणवाहिनी । सतीवसुमनानंदासुभद्रानवमीमता।
इतिनवरेखाःप्रागपरायताःकृत्वा । हिरण्यासुव्रतालक्ष्मीविभूतिर्विमलाप्रिया ॥ जयाकालींविशोकाचेतिनवदक्षिणोत्तरा
यताःकृत्वामध्यकोष्ठचतुष्टयमेकीकृत्यकोणेषुरेखादद्यात् । तेनकोणचतुष्केअर्द्धकोष्ठानिसंपद्यंते । तत्रमध्यकोष्टचतुष्टयं
ब्रह्मणाः । तत्पूर्वस्यांअर्यमाचतुष्पदः । एवंदक्षिणेविवस्वान् । पश्चिमेमित्रः । उत्तरस्यांमहीधरः । कोणार्द्धकोष्टद्वंद्वे
अग्न्यादि । सावित्रं । सवित्तारं । नैर्ऋत्यांशक्रं । इंद्रंजयं । वायव्येरुद्रं । रुद्रजयं । ऐशान्याआपंआपवत्सं । ब्रह्मण:
कोष्टचतुष्टयाग्नेयकोणसंलग्नकर्णसूत्रप्रांतयोष्टोभयपार्श्वे । शर्वं । गुहं । निर्ऋतौअर्यमणं । जृंभकं। वायोपिलिपिछं । चरकीं।
ऐशान्यांविदारीं । पूतनां । ततोबाह्यपंक्तौ । ईशानाद्यर्द्धषदीदितःअष्टौपूर्वस्यां ईशान । पर्जन्य । जयंत । शक्र ।
भास्कर । सत्यं । वृष । अंतरिक्षएवमाग्नेयादिनिर्ऋत्यंतंदक्षिणस्यामष्टौ। अग्निः। पूषा। वितथ । यम । गृहरक्षक । गंधर्व।
भृंगराज । मृग । एवंनिर्ऋतिकोणाद्वाय्वंतं पश्चिमस्यामष्टौनिर्ऋति । दौवारिक । सुग्रीव । वरुण । पुष्पदंत । असुरशेष।
रोग। एवमष्टौवायुकोणाद्यारभ्यऐशान्यांतमुत्तरस्या । वायु। नाग । मुख्य। सोम । भल्लाट । अर्गल । दिति । अदिति।
एवंद्वितीयांतनाममंत्रैणरेतानुक्तक्रमेणसंस्थाप्यआवाह्यप्रतिष्ठांकुर्यात्। संभवेसति अग्निस्थापनादिवास्तुदेवताकचरोरधि
श्रयणानंतरमिदंकार्यं । होमाद्यसंभवेस्थापनपूजाबलिदानाद्येवविधेयं । तत्रावाहनमंत्रः । आवाहयामिदेवेशंवास्तुदेवं
महाबलं । देवदेवंगणाध्यक्ष्यपातालतलवासिनं । एवमावाह्यप्रतिष्ठामंत्रौपठित्वाअस्मिन्मंडलेस्थापितदेवतासहितोवास्तु।
पुरुषःसुप्रतिष्ठितोवरदोभवतु । ततःपूजा । चंदनपुष्पादिभिःप्रणवादिनमोंतचतुर्थ्यंतवन्नाममंत्रैः । आदौवास्तुपुरुषं





वास्तोष्पतइतिमंत्रेणपाद्याद्युपचारैरभ्यर्च्यब्रह्मादीन्पूजयेत् । तेषामभिधानानिस्थापनावसरोक्तानि । ब्रह्मणेनमः ।
इत्यादि । एवंचंदनपुष्पधूपदीपनैवेद्यैरभ्यर्च्यबलिंदद्यात् । बलिमुपनीयसंप्रोक्ष्यवास्तोष्पतेतिमंत्रंपठित्वा वास्तुपुरुषायेमं
बलिंसमर्पयामि । ततःप्रणमेत् । वास्तुपुरुषनमस्तेस्तुभूशय्याभिरतप्रभो । मद्गृहंधनधान्याद्यैःसमृद्धंकुरुसर्वदा । ततः
पूजापरिपूर्णतांप्रार्थयेत् । अद्यपूर्वोच्चरितएवं० तिथौमंडपसकलीकरणांवास्तुपूजनकृतस्यविधेः सर्वंपरिपूर्णमस्तु ॥
ततोरक्षोघ्नमंत्रैर्मंडपंत्रिसूत्र्यावेष्टयेत् ॥ ततोमंडपेध्वजापताकानांचस्थापनं । तद्यथा । अद्येत्याद्युक्त्वाअस्मिन्मंडपेविघ्नोघ
विनाशार्थंमंडपस्यरक्षार्थं पताकानांध्वजानांचपूजादिदशदिक्षुस्थापनं तत्तदेवानांचपूजनमहंकरिष्ये । इतिसंकल्प्यप्राच्या।
माशुः शिशानेतिसिंदूरवर्णापताकांजयाभिधांस्थापयामि । इतिसंस्थाप्यजयायैनमः । इतिपूजयेत् । पीतंचध्वजंत्रातार
मिंद्रमितिकुमुदनामानंस्थापयामि इतिसंस्थाप्यकुमुदायनमःइतिपूजयेत् । आग्नेय्यांअग्निंदूतेतिकर्बुरांपताकांविजयाभिधां
स्थापयामि इतिसंस्थाप्यतत्रविजयायैनमः । अग्निस्तिग्मेनेतिरक्तंध्वजंकुमुदाक्षाभिधंस्थापयामि । तत्रकुमुदाक्षायनमः ।
दक्षिणंधूम्रांपताकांआयंगोरितिलक्ष्म्यभिधांस्थापयामि । लक्ष्म्यैनमः । नाकेसुपर्णमितिश्यामंध्वजंपुंडरीकाभिधंस्थाप
यामि । पुंडरीकायनमः । निर्ऋतोवेत्थाहीतिधूसरवर्णापताकांधृत्यभिधांस्थापयामि । धृत्यैनमः अनेनैवमंत्रेणनीलवर्णं
ध्वजंवामनाभिधंस्थापयामि । वामनायनमः । पश्चिमेमेधाभांपताकांइमंमेवरुणेतिमेधाभिधांस्थापयामि । मेधायैनमः ।
श्वेतंध्वजंयदाक्रदेतिशंकुकर्णनामानंस्थापयागि । शंकुकर्णनामायनमः । वायौनीलांपताकांप्राणशिशुरितिसरस्वत्यभिधां
स्थापयामि । सरस्वत्यैनमः । वातआवातिवित्तिधूम्रवर्णंध्वजचित्रभिधंस्थापयामि । चित्रायनमः । उत्तरेपांडुवर्ण
पताकांआप्यायस्वेतितुष्ट्याभिधांस्थापयामि । तुष्ट्यैनमः । हरितवर्णंध्वजंतवाहा॰सोमेतिसर्वदेवनामानस्थापयामि । सर्व
देवेभ्योनमः । ईशान्यांश्वेतवर्णापताकांआवोराजेतिपुष्ट्यभिधांस्थापयामि । पुष्ट्यैनमः । पंचवर्णंध्वजंअभित्वाशूरेति
सुमुखाभिधंस्थापयामि । सुमुखायनमः । इंद्रेशानयोर्मध्येश्वेतां पताकांब्रह्मजज्ञानमितिगायत्र्याभिधांस्थापयामि ।
गायत्र्यैनमः । रक्तंध्वजंमयिवर्चइतिविमुखाधिंभिधंस्थापयामि । विमुखायनमः । निर्ऋतिवरुणयोर्मध्येमेघवर्णायां

पताकायांसंधामितिशात्यभिधांस्थापयामि। शांतायैनमः। ततःश्यामंध्वजंअनेनैवमंत्रेणसुप्रतिष्ठाभिधंस्थापयामि। सुप्रतिष्ठितायनमः। ततोमहाध्वजंब्रह्मजन्यानमितिसंस्थाप्यब्रह्मणेनमः। ततोंर्जलौपुष्पाण्यादाय। ब्रह्माद्यास्तंभदेवायेद्वारतोरणसंस्थिताः। पताकासुचयेदेवाध्वजाग्रेषुषसंस्थिताः। आवाहयामितान्सर्वान्यज्ञरक्षार्थहेतवेऽगृह्णंतुपूजनंसर्वेकृतुरक्षंतुसर्वतः। इतिमंत्रद्वयंपठित्वा। अस्मिन्मंडपेस्तंभद्वारतोरणशंखचक्रगदापद्मानां पताकाध्वजानांचदेवानावाहयामि इत्यावाह्यअक्षतानादायवाक्मनएताएवसमहाव्रता इतिप्रतिष्ठामंत्रौपठित्वा अद्येसमस्तपुण्यकालावयवयोगेषु पुण्यंग्रहगुणविशिष्टायांतिथौ अस्मिन्मंडपेमंडपस्तंभतोरण शंखचक्रगदापद्मपताका ध्वजादिष्वावाहित देवाःसुप्रतिष्ठता वरदाभवंतु इत्युक्त्वा अक्षतान्प्रक्षिपेत् इतिमंडपसकलीकरणं॥ ततःकुंडसंस्कारः। तद्यथा। यथाकुंडात्पश्चिमतःउपविश्यआचम्यप्राणानायम्य गणपतिंउमांनवग्रहान् श्रीपरमेश्वरंचनत्वासुखश्चेत्यादिपठित्वा देशकालौसंकीर्त्य क्रियमाणेऽस्मिन्लक्षहोमाख्येकर्मणि अग्निप्रतिष्ठांतदंगतयासंमार्जनादि मेखलायोनि देवतास्थापनपूजनादिकरिष्ये इतिसंकल्प्य। अंजलौपुष्पाण्यादायकुंडंस्पृष्ट्वाआवाहयेत्। आवाहयामितत्कुंडंविश्वकर्मविनिर्मितं। शरीरंप्रकृतेर्दिव्यमग्न्यधिष्ठानमद्भुतं॥ इत्यावाह्यायेचकुंडेस्थितादेवाकुंडांगेयाश्चदेवताः। रूद्धिंयच्छंतुतेसर्वेयज्ञसिद्धिंमुदान्विताः। हेकुंडत्वनिर्माणंरचितंविश्वकर्मणा। अस्माकंवांछितांसिद्धिंयज्ञसिद्धिंददातुभो। इतिकुंडंसंप्राथ्यर्कुंडमध्येविश्वकर्माणंपूजयेत् विश्वकर्मन्हविष्येतिविश्वकर्माभौवनस्त्रिष्टुप्विश्वकर्मापूजनेविनियोगः। विश्वकर्मन्हविषेतिपठित्वा विश्वकर्मणेनमइतिचंदनपुष्पादिभिःसंपूज्यप्रार्थयेत्। अज्ञानात्ज्ञानतोवापिदोषास्युखननोद्भवाः। नाशयत्वंहितान्सर्वान्विश्वकर्मन्नमोस्तुते। इतिसंप्राथ्र्यनमस्कुर्यात्। ततइदंविष्णुरितिउपरिमेखलायांश्वेतवर्णालंकृतायां विष्णुमावाह्यपूजयेत् विष्णोयज्ञपतेदेवदुष्टदैत्यनिषूदन। विभोयज्ञस्यरक्षार्थंकुंडेस्मिन्संन्निधोभव। इत्यावाह्यइदंविष्णुरितिविष्णुर्गायत्रीविष्णुः। पूजनेविनियोगः। इदाद्मेइतिसामपठित्वा विष्णवेनमः। प्रथमायैविष्णुदैवत्यैसात्विकायै। श्वेतवर्णालंकृतायैमेखलायैनमः। मध्यमेखलायरक्तवर्णालंकृतायां ब्रह्माणमावाह्यपूजयेत्। हंसपृष्ठसमारूढदेवदेवगणावृतः॥ रक्षार्थंममसत्रस्यकुंडेस्मिन्सान्निधोभव। ब्रह्मजन्यानमिति





रूतुस्त्रिष्ठुप्ब्रह्मा। पूजनेविनियोगःब्रह्मा। ब्रा३ह्मा। इतिसामपठित्वा। ब्रह्मणेनम। द्वितियायैब्रह्मदैवत्यैराजस्यैरक्तवर्णालंकृतायैमेखलायैनमः। अधोमेखलयांकृष्णवर्णयुतायांरुद्रमावाहयेत्। गंगाधरमहादेववृषारूढमहेश्वर आगछभगवन्रुद्रकुंडेस्मिन्संनिधोभव। आवोराजेतिवामदेवस्त्रिष्टुप्रुद्रपूजनेविनियोगः। आवोराजाइतिसामपठित्वा रुद्रायनमः। तृतीयायैरुद्रदैवत्यैतामस्यैकृष्णवर्णालंकृतायैमेखलायैनमः॥ अथयोनिपूजा॥ जगदुत्पत्तिहेतुकायैमनोभवयुतायैयोन्यैनमः। आपागादित्तिराग्निरनुष्टुप्रात्रिः। पूजनेविनियोगः। होर्रायि॥३॥ आप्रागान्भद्रायुवतिः। इतिपठित्वापूजयेत्। सेवंतेमहतीयोनिंदेवर्षिसिद्धमानवाः। चतुराशीतिलक्षाणिपन्नगाद्याःशरीसृपाः। पशवःपक्षिणःसर्वेसंसरंतियतोभुवि। विश्वयोनिरितिख्याताजगदुत्पत्तिहेतुका। मनोभिश्चैवसर्वस्तत्रविधीयते॥ विष्णवाद्युद्देशेनापिहोमस्तत्रैवोक्तःप्रणवादिभिश्चतल्लिंगैः। जुहुयात्सर्वदेवानांवेद्यांयेचोपकल्पिताइति। स्नानेदानेचमंत्रास्युस्तएवमुनिसत्तम। वसोर्द्धाराविधानंचलक्षहोमवदिष्यते। दक्षिणाःसहस्रंधेनवः। सहस्रंसंख्यइति। ग्रहशांतिकर्मणोक्तायाग्रहदक्षिणाच। सर्वेषामथवागावइत्यस्मिन्पक्षेनवशतंगावः। नवशतंसुवर्णं। अनेनविधिनायस्तुकोटिहोमंसमारभेत्॥ सर्वान्कामानवाप्नोतिनतोविष्णुपदंव्रजेत्॥ यपठेछृणुयाद्वापिग्रहयज्ञंप्रयत्नतः। सर्वपापविशुद्धात्मापदमिंद्रस्यगछति। अश्वमेधसहस्राणिदशचाष्टौसमाचरेत्। कृत्वायत्फलमाप्नोतिकोटिहोमात्तदश्नुते। ब्रह्महत्यासहस्राणिभ्रूणहत्यार्बुदानिच। नश्यंतिकोटिहोमेनयथावच्छिन्नभाषितं। कोटिहोमस्तुकर्त्तव्योयदावित्तंभवेद्बह। सर्वानर्थानवाप्नोतिकुर्वन्कामान्विधानतः। पूज्यतेशिवलोकेचवस्वादित्यमरुद्गणैः। यावत्कल्पशतंतावन्ततोमोक्षमवाप्नुयात। सकामोयस्त्विमंकुर्यात्कोटिहोमंयथाविधि। तंसत्काममवाप्नोति पदंवानत्यमश्नुते। पुत्रार्थीलभतेपुत्रान्धनार्थीलभतेधनं। भार्यार्थीलभतेभार्यं। कुमारींचशुभंपतिं॥ भ्रष्टराज्यंतथाराज्यंश्रीकामःश्रियमाप्नुयात्॥ यंयंप्रार्थयतेकामंतंतंप्राप्नोतिपुष्कलं। निष्कामःकुरुतेयस्तुपरंब्रह्माधिगछति। ग्रहयज्ञमकुर्यायस्त्वकामोन्यत्रमानवः। सविष्णोःपदमाप्नोतिपुनरावृत्तिदुर्लभं। यस्त्विदंश्रृणुयांनित्यंश्रावयेद्वापिमानवः। नतस्यग्रहपीडास्यान्नचबंधुजनक्षयः। ग्रहयज्ञव्रतंगेहेलिखितंयस्यतिष्ठति। नतत्र

पीडापापानांनरोगोनचवंधुनां अशेषयज्ञफलदमशेषाधौघनाशनं ॥ कोटिहोमेविदुःप्राज्ञाभुक्तिमुक्तिफलप्रद । अश्वमेध
समंप्राहुर्लक्षहोमंसुरोत्तमाः । द्वादशाहसमस्तद्वन्नवग्रहमखस्मृतः । इतिकथितमिदानीमुत्सवानंदहेतुः । सकलकलुषहारी
देवयज्ञा ॥ अग्निमूर्द्धेतिसाम्नास्वाग्रेसमानीय अनेनैवमंत्रेणाग्निंपूजयेत् । संपूज्यदेवतारूपमग्निमात्मनोभिमुखंअग्निदूतेति
स्थापयेत् । अग्निंदूतेतिभरद्वाजोगायत्र्याग्निः । स्थापनेविनियोगः । सामपठित्वावरदनामानमग्निंप्रतिष्ठापयामि इति
कुंभमध्येस्थापयेत् । शतमंगलनामानमित्यन्येपद्धतिकाराः । ततःपुष्पांजलिहस्तोयजमामऽग्निमावाहयेत् । अग्रआया
हीतिगोतमोगायत्र्यग्निः । आवाहनेविनियोगः ॥ अग्नआयाहीतिसामपठित्वाशांडिल्यगोत्रयज्ञस्वरूपाग्ने अत्रस्वागतो
भव । सुप्रसन्नोभव । ततइंधनप्रक्षेपेणसुसमिध्यअग्निंप्रज्वाल्यनमस्कुर्यात् । अग्निंप्रज्वलितंवंवेजातवेदंहुताशनं । सुवर्ण
वर्णममलंसमिद्धंविश्वतोमुखंअनेननमस्कृत्य अग्निंध्यायेत् । रुद्रतेजऽसमुद्भूतंद्विमूर्द्धानद्विनासिकं । षण्नेत्रंचचतुःश्रोत्रं
त्रिपादंसप्तहस्तकं । याम्यभागेचतुर्हस्तंसव्यभागेत्रिहस्तकं ॥ स्रुवंस्रुचंचशक्तिंचअक्षमालांचदक्षिणे । तोमरंव्यजनंचैव
घृतपात्रंचवामके । विभ्रंतंसप्तभि । र्हस्तैर्द्विमुखंसप्तजिह्वकं । दक्षिणेचचतुर्जिह्वंत्तिजिह्वमुत्तरंमुखं ॥ कोटिद्वादशमूर्त्त्या
ख्यंद्विपंचाशत्कलायुतं । स्वाहास्वधावषट्कारैरंकितमेषवाहनं ॥ रक्तमाल्यांबरधरंरक्तपद्मासनस्थितं । त्वंमुखंसर्वदेवानां
सप्तार्चिरमितद्युते । आगच्छभगवन्नग्नेयज्ञेस्मिन्सन्निधोभव ॥ ततःसर्वतःपाणिपादांतःसर्वतोक्षिशिरोमुखं । विश्वरूपो
महानग्निःप्रणीतःसर्वकर्मसुइत्यग्निंध्यात्वा अग्निंदूतमित्यग्निंसंपूज्यनमस्कुर्यात् ॥ ॥ इत्यग्निस्थापनं ॥ ॥ ततआचार्यः
स्तस्मिन्नग्नौप्रादेशमितांसमिधंजुहुयात् । ततःइदंभूमेरितिभूमिजपः । इमंस्तोममितितृचेनपरिसमुहनं । दक्षिणतोग्नेर्यथा
विधिनाब्रह्माणमुपवेश्यागत्य चरुधर्मणपात्राणामासादनं । होमद्रव्यस्थापिआसादनं । प्रोक्षणं । सजलांचरुस्थालीमग्ना
वाधायपश्चादग्नेः पूर्वाग्रास्त्रिरूतकुशेषु उलूखलाद्यासाद्यग्रहाणां यथावच्चरुंनिरुप्यकंडनादिप्रक्षालनांतेपवित्रां तर्हितायां
स्थाल्यांतंडुलानानावापः । त्रिःप्रदक्षिणंमेक्षणेनावघट्टनं । एवंचरोरधिश्रयणांतंकृत्वा । ग्रहवेद्यांग्रहाणांस्थापनंकार्यं ।
ग्रहस्थापनमयुतहोमप्रकरणेउक्तंचतथाप्यत्रप्रकरणभेदात्प्रयोग सौकर्यायपुनरुच्यते । आसादितमहतंवस्त्रंप्राग्दशमुदादशं





वासमास्तीर्यतदुपरि अष्टदलंग्रहाणांस्थापनार्थंचंदनादिनाकार्यं। तच्चेत्थं। चतुस्त्रिंशदंगुलक्षेत्रमानेनमध्यसूत्रदत्वातस्यसूत्रस्य
द्वादशभागान्कृत्वा एकंभागंप्राग्भक्तंपश्चात्पंचत्यक्त्वा अवशिष्टभागदशकस्यषड्भागान्कृत्वा मध्येसूत्रादिनिधाय अंशद्वये
नैकंवृत्तंतदुपरि अंशद्वयेनद्वितीयं । तदुपरिअंशद्वयेनतृतीयं । एवंवृत्तत्रयंविधायदक्षिणोदक्सूत्रंदत्वात्रिदिक्कोणसूत्रद्वयंच
दत्वाबाह्यवृत्तान्ततरालमात्रंसूत्रं केसरवृत्ताग्रेनिधाय तस्योभयतोर्द्धनिशाकरानालिख्यसंधिषु अष्टौसीमारेखादिग्विदिग्गतसूत्र
योस्तृतीयवृत्तांतरालार्द्धमानेनदलाग्राण्युपरिकुर्यात्। इदंत्यक्तांशपर्यंतंकर्त्तव्यं। ततःपत्रांतरालेषुकृतचंद्रार्द्धादिसंमार्ज्यपत्रा
ष्टकंसम्यग्विदध्यात् । तद्बहिश्चतुरस्रंचतुर्द्वारोपेयंविधाय कर्णिकामारभ्यग्रहाणांमंडलानिकुर्यात्। यथा। यवचतुर्थांशोनां
गुलद्वयव्यासार्द्धसूत्रेणकर्णिकांतर्वृत्तंमंडलंलिखेत् । आग्नेयदलेपादोनयवोनपंचांगुलमितमध्यसूत्रेणचतुरस्रं निष्पादयेत् ।
तच्चंचतुरस्रंनिष्पादनप्रकारेण । दक्षिणेअंगुलद्वयमानेनमूलभूमिरेखांतिर्यग्गातांकृत्वा तन्मध्यतस्त्र्यंगुलंमध्यसूत्रंदत्वा
पूर्वाग्रंत्रिकोणंकार्यं । अथेशदलेचतुरंगुलमध्यसूत्रंदत्वा मूलादेकांगुलंत्यक्त्वाअपछिद्यतिर्यक्त्र्यंगुलांरेखांकृत्वा पूर्वाग्रात्र्यं
गुलमानेनत्रिकोणंअपराग्रादेकांगुलंत्रिकोणमितित्रिकोणद्वयं पूर्वापराग्रंमध्यैकभुवंकुर्यात् । उत्तरदलेत्र्यंगुलमध्यसूत्रं
द्व्यंगुलभुवंदीर्घचतुरस्रंकार्यं । पूर्वदलेचतुरंगुलंमध्यसूत्रंदत्वात्र्यंगुलविस्तारं मूलभूसूत्रंदक्षिणोत्तरयोर्द्व्यंगुलभित्तीपूर्ववत
स्त्रिकोणंद्व्यंगुलमध्यंकुर्यादेवंपंचकोणं । पश्चिमदलेएकांगुलसप्तयवैकयूकामितंज्यासूत्रंदत्वा एकांगुलमितव्यासार्द्धसूत्रेण
वृत्तार्द्धंकुर्यात् । निर्ऋतिदलेसप्तयवाधिकत्र्यंगुलव्यासार्द्धेनराहोर्वृत्तमंडलं । वायव्यदलेनवांगुलंमध्यसूत्रंपंचांगुलत्रियव
पंचयूकापरिमितमूलभुवंदीर्घत्रिकोणमुत्तराग्रंध्वजाकृतिमंडलं । अत्रस्थापनावसरेउक्तप्रकारेणमंडलकरणासंभवाद्विना
दिनाकृत्स्नामंडलानिकर्त्तव्यानि । अष्टादशकरणमध्येवमेवज्ञेयं ॥ एवंमंडलानिकृत्वा कर्णिकायांताम्रमयींसूर्यप्रतिमां
सन्यस्याग्नेयदलेस्फाटिकींचंद्रस्यन्यसेत् । एवंदक्षिणदलेरक्तचंदनमयींभौमस्य । ऐशान्यांसौवर्णींबुधस्य । उत्तरे
सौवर्णींगुरोः ॥ पूर्वदलेराजतींशुक्रस्य । पश्चिमदलेलोहमयींशनेः । नैर्ऋत्येसीसमयींराहोः । वायव्यदलेकांस्यमयीं
केतो । अथवामृद्दारुमय्यः प्रतिमाःसन्यस्याशक्ताक्षुक्तंदुलपुंजान्वासंपादयेत् । अन्यदेवानामपिप्रतिदलंतत्तदेवानां

स्थापनंकार्यं । भास्करादुत्तरस्यांशंभोःस्थापनंसोमादाग्नेय्यांउमायाः । भौमाद्दक्षिणेस्कंदस्य । बुधात्प्रतीच्यांविष्णोः। गुरोःप्राच्यांप्रजापतेः । शुक्रात्पूर्वस्यमिंद्रस्य। शनैश्चरान्नैर्ऋतीयमस्य । राहोरुत्तरस्यांकालस्य । केतोर्दक्षिणेचित्रगुप्तस्यग्रहदेवतयोर्मध्येअधिदेवान्स्थापयेत् । तेचअग्न्यादयः । एवंलोकपालान् । राहोर्मंडलेउत्तरस्यांविनायकस्य । शनैश्चरमंडलेउत्तरस्यांदुर्गायाः । सूर्यस्यमंडलेउत्तरस्यांवायोः । राहोर्मंडलेदक्षिणस्यां । आकाशस्य । केतोर्मंडले दक्षिणस्यांअश्विनीकुमारयोः । एतेलोकपालाः । ग्रहाग्नीनांग्रहनक्षत्राणांचतत्तन्मंडलेप्राच्यांस्थापनंकर्त्तव्यं । दिक्पालान् स्वस्वदिक्षु । अत्रतुग्रहपीठेउत्तरस्यांगरुत्मानधिकःस्थाप्यः । पूजावसरेपूज्यश्च । एवंसर्वत्रसर्वान्यथास्थानसन्यस्यपूजां कुर्यात् । सर्वत्रहोमप्रकरणोक्तमंत्रैःस्थापनंकर्त्तव्यंमितिकेचित् । स्थापनंप्रकरणेमंत्राणामनुपदेशान्नेतिबहवः ॥ अथ पूजा ॥ ग्रहवेदीपश्चादुदगग्रमासनंसन्यस्यतत्रयजमानः प्राङ्मुखउपविश्याचम्य प्राणानायम्यस्वदक्षिणेपूजासंभारं सन्यस्यताम्रपात्रेशुद्धोदकमापूर्यचंदनपुष्पाक्षतंस्तत्रनिक्षिप्य कुशाग्रैस्तज्जलंसंस्पृश्यगायत्र्यादिमंत्रैस्तज्जलमभिमंत्र्यकुशाग्र गृहीतजलेनपूजोपहारंसंप्रोक्ष्य आदित्यादिग्रहाणांपूजोपहाराणांपवित्रतास्तु । इतिसंप्रार्थ्य । अस्त्वितिद्विजैःप्रत्युक्तेदेश कालादिसंप्रार्थयेत् । ततोदेशकालौसंकीर्त्यकामनांचाभाष्य अस्मिन्लक्षहोमकर्मणिआदित्यादिग्रहाणांसपरिवाराणां पूजामहंकरिष्य इतिसंकल्प्य ग्रहाणांमावाहनंकुर्यात् । आवाहनंतुप्रतिमाक्षतपुंजादिस्थापितंसंस्पृश्यकार्यं । सहस्रदीप्ते रक्ताभग्रहाणांप्रथमस्तथा । त्वमादित्येषुसर्वाभभानुमावाहयाम्यहं ॥ ॐभूर्भुवःस्वःभगवन्नादित्यग्रहाधिपतेकाश्यपगोत्र कलिंगदेशेश्वरजपापुष्पोपमांगद्युतेतेजोनिधेत्रिलोकप्रकाशक त्रिदेवतामयमूर्त्तेनमस्तेसन्नद्धारुण ध्वजपताकोपशोभितेन सप्ताश्वरथवाहनेनागच्छपद्मकर्णिकायां ताम्रप्रतिमांवर्त्तुलपीठेधितिष्ठपूजार्थंत्वामावाहयामि । ततआग्नेयदले । शीतांशो शंखवर्णाभद्विजराजविभोजने । त्वयिपूजांकर्त्तुमिच्छंत्सोममावाहयाम्यहं । ॐभूर्भुवःस्वःभगवंत्सोमद्विजाधिपतेसुधामय शरीरात्रिगोत्रयमुनादेशेश्वरगोक्षीरधवलांगकांतेद्विभुजगदावरदानांकितकरशुक्लांबरमाल्यानुलेपनसर्वांगामुक्तमौक्तिका भरणरमणीयसमस्तलोकाप्यायकदेवता स्वात्ममूर्त्तेनमस्ते सन्नद्धधवलध्वजपताकोपशोभितेन दशश्वेताश्ववाहनेनागच्छ





पद्माग्नेयदलेस्फाटिकप्रतिमांप्रत्यङ्मुखींचतुरस्रपीठेऽधितिष्ठपूजार्थंत्वामावाहयामि । ततोदक्षिणदले । ग्रहाणामतिबलं तीक्ष्णंदीप्तांगारसमप्रभं । नित्यमंदारुणाभंचभौममावाहयाम्यहं । ॐभूर्भुवःस्वःभगवन्नंगारकाग्न्याकृतेभारद्वाजगोत्रा वंतिदेशेश्वरज्वालापुंजोपमांगद्युतेचतुर्भुजशक्तिशूलगदा खट्वांगधारिन्रक्तांबरमाल्यानुलेपन प्रवालाभरणभूषितसर्वांग दुरालोकदीप्तेनमस्तेसन्नद्धरक्तध्वजपताकोपशोभितेन रक्तमेषरथवाहनेनागच्छपद्म । दक्षिणदलेरक्तचंदनप्रतिमांदक्षिणा मुखीं त्रिकोणाकारपीठेऽधितिष्ठपूजार्थंत्वामावाहयामि । ततईशानदले । पीतंशशिसुतंसौम्यंहिरण्याभरणप्रियं । इंदुजंसौम्यनामानंबुधमावाहयाम्यहं । ॐभूर्भुवःस्वःभगवंत्सौम्याकृतेसर्वज्ञानमयात्रिगोत्रमगधदेशेश्वरकुंकुमावर्णांग द्युतेचतुर्भुजखड्गखेटकगदावरदानांकित पीतांबरमाल्यानुलेपन मरकताभरणालंकृत सर्वांगद्युतेविबुधपतेनमस्ते सन्नद्ध पीतपताकोपशोभितेनचतुःसिंहरथवाहनेनागच्छपद्मशानदले सुवर्णप्रतिमामुदङ्मुखींबाणाकार पीठेऽधितिष्ठपूजार्थंत्वामा वाहयामि । ततउत्तरदले । सुराणांगुरुपीताभंप्रणतांक्लेशनाशनं । ध्वजेज्जीवंप्राधिनांच गुरुमावाहयाम्यहं । ॐभूर्भुवःस्वः भगवन्बृहस्पते समस्तदेवताचार्यांगिरसगोत्र सिंधुदेशेश्वरदीप्तसुवर्णसदृशांगद्युते चतुर्भुजदंडकमंडलक्षसूत्रवरदानांकित पीतांबरमाल्यानुलेपन पुष्परागमयाभरणरमणीयसमस्त विद्याधिपतेनमस्तेसन्नद्धपीत ध्वजपताकोपशोभितेनपीताश्व रथवाहनेनागच्छपद्मोत्तरदले सुवर्णप्रतिमामुदङ्मुखींदीर्घचतुरस्र पीठेधितिष्ठपूजार्थंत्वामावाहयामि । ततःपूर्वदले । सुरारिपुंमहावीर्यमसुराणांचमंत्रिणंशंखगोक्षीरवर्णाभंशुक्रमावाहयाम्यहं । ॐभूर्भुवःस्वः भगवन्भार्गवदैत्यगुरोभार्गव गोत्रभोजकटदेशेश्वररजतोज्वलांगकांते चतुर्भुजदंडकमंडलक्षसूत्रवरदानांकितकरमाल्यानुलेपनवस्त्राभरणभूषितसर्वांग समस्तनीतिशास्त्रनिपुणमतेनमस्ते सन्नद्धशुक्लध्वजपताकोपशोभितेन शुक्लाश्वरथेनागच्छपद्मपूर्वदले रजतप्रतिमामाङ्मुखीं पंचकोणपीठेऽधितिष्ठपूजार्थंत्वामावाहयामि । ततःपश्चिमदले विक्रानुवक्रगमनंस्वच्छंदगतिचारिणं ॥ असितायसवर्णा भंसौरिमावाहयाम्यहं । ॐभूर्भुवःस्वः भगवन्शनैश्चरभास्करतनयकाश्यपगोत्र सौराष्ट्रदेशेश्वरकज्जलाभकांतेचतुर्भुज चापतूणीरकृपाणाभयां कितकरनीलांबरमाल्यानुलेपन नीलरत्नभूषणालंकृत सर्वांगसमस्तभुवनभीषणामर्षमूर्त्तेनमस्ते

सन्नद्धनीलध्वजपताकोपशोभितेन नीलगृध्ररथवाहनेनागच्छपद्म पश्चिमदलेकालायसप्रतिमां प्रत्यङ्मुखींचापाकारपीठे ऽधितिष्ठपूजार्थंत्वामावाहयामि । ततोनिर्ऋतिदले । चंद्रार्कौग्रसतेयस्तुग्रस्ताबुत्सृज्जतेपुनःनीलमेघप्रतीकाशंराहुमावाहयाम्यहं ॥ ॐभूर्भुवःस्वःभभगवन्राहोरविसोममर्दनसिंहिकानंदनपैठीनसिगोत्र वर्बरदेशेश्वरकालमेघद्युतेव्याघ्रवदन चतुर्भुजखड्गशूलचर्मवरदानं कितकरकृष्णांबरमाल्यानुलेपन गोमेदिकाभरणभूषितसर्वांगशौर्यनिधेनमस्ते सन्नद्धकृष्ण ध्वजपताकोपशोभितेकृष्णसिंहरथवाहने नागच्छपद्मनैर्ऋतिदले सीसप्रतिमां दक्षिणामुखींवर्त्तुलाकारपीठेऽधितिष्ठपूजार्थं त्वामावाहयामि । ततोवायव्यदले । ग्रहाणामुपग्रहंश्रेष्ठंग्रहनक्षत्रचारिणं । निर्वाणांगारवर्णाभंकेतुमावाहयाम्यहं । ॐभूर्भुवःस्वःभगवन्केतोकामरूपजैमिनिगोत्रं मध्यदेशेश्वरधूम्रवर्णध्वजाकृतेद्विभुजगदावरदानां कितकरमाचित्रांबरमाल्यानुलेपनवैडूर्यमयाभरणभूषित सर्वांगचित्रशक्तेनमस्ते सन्नद्धचित्रध्वजपताकोपशोभितेनचित्रकपोतरथवाहनेनागच्छ पद्मवायव्यदले कांस्यप्रतिमांदक्षिणामुखीं ध्वजाकारपीठेऽधितिष्ठपूजार्थंत्वामावाहयामि ॥ ॥ इतिग्रहाणामावाहनं ॥

॥ अथाधिदेवानां ॥ भास्करदुत्तरस्यां ॥ ॐभूर्भुवःस्वः भगवंतंपंचवक्त्रंत्रिलोचनं वृषारूढंकपालशूलखड्गांगादिधारिणं चंद्रमौलिंआदित्याधिदैवतंशंभुमावाहयामि । ततःसोमादाग्नेय्यां । ॐभूर्भुवःस्वः भगवतीमक्षसूत्रकमलदर्पणकमंडलु धारिणींनानाभरणभूषितांत्रिदशपूजितांसोमाधिदैवतामुमामावाहयामि । भौमाद्दक्षिणस्यां ॥ ॐभूर्भुवःस्वःभगवंतंषण्मुखं चतुर्भुजंअंकारकाधिदैवतं स्कंदमावाहयामि । बुधात्पश्चिमे ॥ ॐभूर्भुवःस्वः भगवंतंचतुर्भुजंकौस्तुभादिनानाभरणभूषितं पीतांबरकौमोदकीपद्मशंखचक्रोपेत्तंबुधाधिदैवतंविष्णुमावाहयामि । गुरोःपूर्वस्यां । ॐभूर्भुवःस्वः भगवंतंब्रह्माणंपद्मासनस्थंजटिलं चतुर्मुखंमक्षमालास्रुव पुस्तककमंडलुधारिणं कृष्णाजिनवाससंबृहस्पत्यधिदैवतं प्रजापतिमावाहयामि । शुक्रात्पूर्वस्यां । ॐभूर्भुवःस्वः भगवंतंचतुर्दंतगजारूढंवज्रांकुशधरं प्राचीपतिंनानाभरणभूषितंशुक्राधिदैवतमिंद्रमावाहयामि । शनेर्निर्ऋतौ । ॐभूर्भुवःस्वः भगवंतंमोषत्पीनंदंडहस्तंरक्तवर्णसद्दशंपाशधरं कृष्णवर्णमहिषारूढंसर्वाभरणभूषितं शनैश्चराधिदैवतंयममावाहयामि । राहोरुत्तरस्यां । ॐभूर्भुवःस्वः करालवदननित्यगंभीषणंपाशदंडधरं सर्पवृश्चिकरोमाण्यं





राहुदधिदैवतंकालमावाहयामि । केतोर्दक्षिणे । ॐभूर्भुवःस्वः उदारवेषंसौम्यदर्शनंलेखिनीपत्रोपेतंद्विभुजंकेत्वधिदैवतं चित्रगुप्तमावाहयामि ॥ इत्यधिदेवताः ॥ प्रत्यधिदेवतास्तुग्रहदेवतयोर्मध्येस्वस्वमंडलेस्थापनीयाः । अतःप्रतिदैवतं स्वामानिनोच्यंते । सूर्यादिम्नः । ॐभूर्भुवःस्वःभगवंतंपिंगलभ्रूश्मश्रुकेशंपिंगाक्षंत्रिनयनमरुणवर्णछागस्थं साक्षसूत्रंसप्ताचिंषंशक्तिवरहस्तद्वयं आदित्यप्रत्यधिदैवमग्निमावाहयामि । ॐभूर्भुवःस्वःस्त्रीरूपधारिणीःश्वेतवर्णमकरवाहनाःपाशकलश धारिणींर्मुक्ताभरणभूषिताः सोमप्रत्यधिदैवता आपआवाहयामि । ॐभूर्भुवःस्वः भगवतींशुक्लवर्णांदिव्याभरणभूषितां चतुर्भुजांसौम्यवपुषांचंद्रांशुसदृशांबरां रत्नपात्रसस्यपात्रौषधिपात्रपद्मोपेतकरांचतुर्दिग्गजपृष्ठगतां । ॐभूर्भुवःस्वःभगवंतं चतुर्भुजंकौस्तुभादिनानानाभरणभूषितंपीतांबरंकौमोदकीपद्मशंखचक्रोपेतंबुधाधीप्रत्यधिदैवतंविष्णुमा० अंगारकप्रत्यधिदैवतंक्षितिमावाहयामि तिविष्णोस्वरूपयागुमाक्रमेवः । इंद्रस्यच ॐभूर्भुवःस्वःसंतानमंजरीवरदानद्विभुजांसर्वाभरणभूषितां गौंशुक्रप्रत्यधिदैवतामिंद्राणीमावाहयामि । ॐभूर्भुवःस्वः यज्ञोपवीतंहंसस्थंएकवक्त्रं अक्षमालास्रुवपुस्तककमंडलुसहित चतुर्भुजंशनैश्चरप्रत्यधिदैवतंप्रजापतिमावाहयामि । ॐभूर्भुवःस्वः अक्षसूत्रवरानकुंडलिकापुच्छयुक्तानेकभोगांस्त्रिभोगान् भीषणान्राहुप्रत्यधिदेवतां सर्पानावाहयामि । ॐभूर्भुवःस्वः पद्मासनस्थंजटिलंचतुर्मुखंअक्षमालास्रुवपुस्तककमंडलुधरं कृष्णाजिनवाससंपार्श्वस्थितहंसकेतुप्रत्यधिदैवतंब्रह्माणमावाहयामि ॥ इतिप्रत्यधिदेवता ॥ ॥ अथग्रहाग्नीनांग्रहनक्षत्राणांच स्थापनं । तत्रस्वस्वमंडलेमध्येप्राच्यांदिशि कर्त्तव्यं । आदित्यमंडले प्राच्यांदिशि । ॐभूर्भुवःस्वःकपिलइहागच्छेहतिष्ठ । ॐभू० विशाखाः इहागच्छइहतिष्ठसोममंडलेप्राच्यां । ॐभू० पिंगलइहागच्छइहतिष्ठ । सोममंडले । ॐभू० कृत्तिकाः इहागच्छइहतिष्ठत । भौममंडलेप्राच्यां । ॐभू० धूमकेतोइहागच्छेहतिष्ठ । ॐभू० पूर्वाषाढाःइहागच्छइहतिष्ठ । बुधस्य मंडलेप्राच्यां । ॐभू० जठराग्ने इहागच्छेहतिष्ठ । ॐभू० धनिष्ठाः इहागच्छइहतिष्ठत । गुरोर्मंडलेप्राच्यांदिशि । ॐभू० शिखिनइहागच्छेहतिष्ठ । उत्तराफाल्गुन्यौइहागच्छतंइहतिष्ठतं । शुक्रस्यमंडलप्राच्यां । ॐभू० हाटकइहागच्छेहतिष्ठ । ॐभू० पुष्यइहागच्छेहतिष्ठ । शनैश्चरमंडलेप्राच्यां । ॐभू० महातेजाइहागच्छेहतिष्ठ । ॐभू० रोहिणीइहागच्छतइहतिष्ठतः ।

राहोर्मंडलेप्राच्यां । ॐभू० हुताशनइहागच्छेहतिष्ठ । ॐभू० भरणीइहागच्छतइहतिष्ठत । केतुमंडलेप्राच्या । ॐभू० हुताशन इहागच्छेहतिष्ठ । ॐभू० अश्लेषाःइहागच्छतइहतिष्ठत ॥ इतिग्रहाग्नीनांग्रहनक्षत्राणां चस्थापनं ॥ ॥ अथलोकपालाः ॥ राहोऽत्तरप्रदेशे ॥ ॐभू० भगवंतंचतुर्भुजंत्रिनेत्रंगजाननंनागयज्ञोपवीतिनं शशांककृतशेखरंदंताक्षमालापरशुमोदकोपेत विनायकमावाहयामि । शनेरुत्तरतः । ॐभू० भगवतींशक्तिबाणशूलखड्गचक्रचंद्रबिंबखेटकपालधनुषमुकुटकोपेतदशभुजां सिंहारूढांदुर्गाख्यंदैत्यासुसंहारिणींदुर्गामावाहयामि ॥ सूर्यादुत्तरतः ॐभू० भगवंतंधावद्धरणिपृष्ठगतंध्वजवरदानधारिणं धूम्रवर्णंवायुमावाहयामि । राहोर्दक्षिणतः । ॐभू० नीलोत्पलाभंनीलांबरधारिणं चंद्रार्कोपेतं द्विभुजंषंढमाकाशमावाह यामि । केतोर्दक्षिणतः । ॐभू० प्रत्येकमौषधीपुस्तकोपेतमक्षिणवामहस्तावन्योन्य संयुक्तदेहावेकस्यदक्षिणपार्श्वेऽपरस्य वामपार्श्वेरत्नभांडकरशुक्लांबरधारिनारीयुग्मोपेतौ देवभिषजावश्विनामावाहयामि ॥ इतिलोकपालाः ॥ ततउत्तरभागे अष्टादलाद्बहिर्गरुत्मंतंस्थापयेत् ॥ ॐभू० भगवंतंपद्मासनस्थं द्विभुजंवराभयकरं पद्मनेत्रंविविधकर्णीद्रैःवतुसांगदहारके यूरंनिगममयामृतवपुषपक्षिराजं गरुत्मंतमावाहयामि ॥ अथदिक्पालाः ॥ पूर्वस्या ॐभू० स्वस्यंसहस्राक्षंवज्रपाणिंशची प्रियमिंद्रमावाहयामि । आग्नेय्यां । ॐभू० सप्तार्चिंषंसप्तहस्तंस्रुक्स्रुवशक्त्यक्षस्त्रक्तोमर व्यंजनघृतपात्राणिदधानं स्वाहाप्रियेमेषवाहनमग्निमावाहयामि । दक्षिणस्या । ॐभू० रक्तवर्णंदंडधरंमहिषवाहनमिलाप्रियंयममावाहयामि । निर्ऋत्यां ॐभू० नीलवर्णंखड्गचर्मधरंमूर्द्धकेशंनरवाहनंकालिकाप्रियं निर्ऋतिमावाहयामि ॥ वारुण्यां । ॐभू० रक्त भूषणंनागपाशधरंमकरवाहनंपद्मिनीप्रियं वरुणमावाहयामि । वायव्यां । ॐभू० श्यामवर्णंहेमदंडधरंकृष्णमृगबाहनं जगत्प्राणरूपंमोहिनीप्रियं वायुमामावाहयामि । उत्तरस्यां । ॐभू० स्वर्णवर्णंनिधीश्वरगदापाणिमश्ववाहनंचित्रिणीप्रियं कुबेरमावाहयामि । ऐशान्यां । ॐभू० शुद्धस्फटिकवर्णंवरदाभयशूलाक्षसूत्रधरंवृषभवाहनं गौरीप्रियंमीशानमावाहयामि। पूर्वेशानयोर्मध्ये । ॐभू० भगवंतंपद्मासनस्थंजटिलंचतुर्मुखंअक्षमालास्रुव पुस्तककमंडलुधारिणं कृष्णाजिनवाससंस्वरा प्रियंब्रह्माणमावाहयामि । निर्ऋतिवरुणयोर्मध्ये । ॐभू० अक्षसूत्रधरंकुंडलिकापुच्छयुक्तंसहस्रंभोगंशुभ्रवर्णमनंतमावाह





यामि । इतिदिक्पालाः ॥ एवंग्रहवेद्यांदेवान्संस्थाप्य ग्रहपीठादैशान्यांयजमानस्याभिषेकार्थंकुंभंस्थापयेत् ॥ तत्राक्षतै रष्टदलंकुत्वा कर्णिकायांकलशस्थापनंकुर्यात् ॥ भूमिर्भूमिरितिंइंद्रोयजुर्भूम्यादयोदेवताः । भूम्यभिमंत्रणेविनियोगः । भूमिः ।३॥ आविशन्कलशेतिउशनागायत्रीसोमः कलशस्थापनेविनियोगः । आविशन्कालाद्दश्रस्सुताः ॥ अपांव्रतस्य आपस्त्रिष्टुब्वापः । कलशपूरणेविनियोगः । ॐहाउ३। ऐरयत् ।३॥ त्वमिमाऔषधीरितिसोमव्रतस्यसोमस्त्रिष्टुप्सोमः। औषधीप्रक्षेपेविनियोगः । हाउ३। होवा३॥ अनेनसर्वौषधीनांसयवानांप्रक्षेपः। दधिक्राव्णइतिअग्निस्त्रिष्टुप्दाधिक्रिः। दधिप्रक्षेपेविनियोगः ॥ ॐहायि । दधिक्राव्णोअकार्षम् । ततःपंचमृत्तिकाः स्वमंत्रेण । स्योनापृथिवीइतिमेधातिथिः परउष्णिक्पृथिवी । मृत्तिकाप्रक्षेपेविनियोगः । स्योनापृथि० । चंद्रमाअप्स्वंतरेतित्रितः पङ्क्तिर्विश्वेदेवाः । हिरण्यादीनां प्रक्षेपेविनियोगः । चंद्रमाआउवा । अनेनहिरण्यस्यप्रक्षेपः । परिव्राजपतिरितिवामदेवोगायत्र्यग्निः । पंचरत्नप्रक्षेपे विनियोगः । परिव्राजपतिरितिपंचरत्नानि । अयमूर्जैतिप्रजापतिरदुष्टुप्दुंबरः । पंचपल्लवनिधानेवि० । अयमूर्जा० । इदंवसोइतिगरोगायत्रींद्रः । वस्त्रवेष्टनेविनियोगः । इदंवसाउ॥ अनेनवासोभ्यामावेष्टकं कलशस्यमुखे । अभावेवाससा सूत्रेणवा । सघातमिति । कुशःपङ्क्तिरिंद्रः । पूर्णपात्रानिधानेविनियोगः। सघातंवृत्रणम् ॥ अनेनसाक्षतसफलपूर्णपात्रस्य निधानं । अत्रकेचिदयमूर्जैतिमध्येफलंप्रक्षिपति । ततस्तस्मिन्कलशेवरुणमावाहयेन्मंत्रेण । यदाकदेतिवसिष्ठोबृहती वरुणः । वरुणवाहनेविनियोगः । यदाकदाइतिपठित्वा वरुणइहागच्छेहतिष्ठततस्तीर्थानामावाहनं । कलशंस्पृष्ट्वासर्वे समुद्राःसरितःसरांसिचनदानिच । आयांतुयजमानस्यदुरितक्षयकारकाः । इतिपठेद् । ततःप्रतिष्ठामंत्रोपठित्वा । आदि त्याद्याग्रहाःस्थापितदेवतासहिताःसकलशा सुप्रतिष्ठितावरदाभवंतु । इत्युक्त्वापीठोपरिअभिमंत्रितान्क्षतान्प्रक्षिपेत् । इतिग्रहाणांस्थापनं॥ अथपूजा ॥ साचप्रत्युपचारंमंत्राणामनान्मानातात्व्याहृत्याउपचाराःकर्त्तव्याः । व्याहृतीनांविश्वा- मित्रजमदग्निभरद्वाजांगायत्र्युष्णिगनुष्टुभऽग्निवायुसूर्याः । पूजायांविनियोगः। ॐभूर्भुवःस्व सूर्यायआसनंसमर्पयामि। एवंपाद्यं । अर्घ्यं । आचमनीयं स्नानं । पुनराचमनीयं । रक्तंवासः । चंदनरक्तचंदनं ॥ करवीरपुष्पाणि । कुंदुरुद्रव्यं

धूपे ॥ धूपनिवेदन । गायत्र्या । उद्वयंनमसस्पतीरीतिमंत्रेणदीपदानं ॥ गायत्र्याविश्वामित्रोगायत्रीसविताधूपदाने
विनियोगः। गायत्रीपठित्वा सूर्यायधूपंनिवेदयामि । उद्वयंतेतिप्रस्कण्वः पङ्क्तिःसूर्यः। दीपदानेविनियोगः । उद्वयंनम
सस्यपरिज्योतिःपश्यंतउत्तरं स्वपश्यंतउत्तरंदेवंदेवत्रासूर्यभगन्मज्योतिरुत्तमं । सूर्यायदीपंनिवेदयामि । सघृतगुडोदनं
नैवेद्यं । पुनराचमनीयं ॥ द्राक्षाफलनिवेदनं । प्रदक्षिणास्तुतिः । नमस्कारः । एतेमंत्राः । सर्वत्रपूजायांप्रयोज्याः ।
ततःसूर्यमंडलस्थानं । पूजनं । व्याहृतीरुच्चार्यशंभवेआसनंसमर्पयामि । एवमन्येप्युपचाराः । चंदनंसर्वेषांमधिदेवादीनां
साधारणं । यथासंभवंशतपत्रादीनिपुष्पाणि । गुग्गुलधूपः । गोघृतेनदीपः । घृतोदननैवेद्यं । सर्वेषांसाधारणोयंपूजा
विधिः । एवंशंभुसंपूज्यं ॐभूर्भुवःस्वःअग्नयेआसनंसमर्पयामि । एवमन्येप्युपचाराः । कपिलायनमः । विशाखाभ्यो
नमः । एवंसूर्यमंडलस्थानसंपूज्य सोमंपूजयेत् । सोमायासनाद्युपचारैःपूजनं । श्वेतंचंदनंश्वेतवस्त्रं । संध्याविकाशिकसल
पुष्पं । घृतलिप्तयवैर्धूपः । घृतमिश्रपयसिपक्वओदनोनैवेद्यं । इक्षुसमर्पणं । मंत्राःपूर्वोक्ताएवसर्वोपचारेषुज्ञेयाः । एवं
उमायैनमः। अद्भ्योनमः । पिंगलायनमः । कृत्तिकाभ्यांनमः । एवंसोमंसंपूज्य भौमंपूजयेत् । भौमायइदमासनमित्यादि।
रक्तंवस्त्रं । रक्तंचंदनं । जपापुष्पं । सर्वरसकृतोधूपः । घृतमिश्रःषष्टिकतंडुलकृतओदनोनैवेद्यंपूगीफलं । एवंभौमंसंपूज्य
स्कंदंपूजयेत् । स्कंदायनमः । क्षित्यैनमः । धूमकेतवेनमः । पूर्वाषाढाभ्योनमः । ततोबुधंपूजयेत् । बुधायआसनंसम
र्पयामि । एवमन्येष्युपचाराः । पीतंवस्त्रं । कुंकुममिश्रपीतंचंदनं । चंपकपुष्पं । अगरुकृतोधूपः । क्षीरमिश्रओदनोनैवेद्यं
नारिंगफलं । ततोविष्णवेनमः । विष्णवेनमः । जठराग्नयेनमः । धनिष्ठाभ्यांनमः । ततोगुरु । पूजा । ॐभू०बृहस्प
तयेइदमासनं । एवंसर्वत्र । पीतंवस्त्रं । पीतंचंदनं । शतपत्रपुष्पाणि । तुरुष्ककृतोधूपः । अगरुइतिलोके । दधिमिश्र
ओदनोनैवेद्यं । जंबीरफलं । ततःप्रजापतयेनमः । इंद्रायनमः । शिखिनेनमः । उत्तराफाल्गुनीभ्यांनमः । ततःशुक्रं
पूजयेत् । शुक्रायेदमासनेनमित्यादि । श्वेतंचंदनं । जातीपुष्पाणि । अगरुबिल्वफलमज्जाभिश्रितोधूपः । घृतमिश्रओदनो
नैवेद्यं । बीजपूरकफलं । ततःइंद्रायनमः । इंद्राण्यैनमः । हाटकायनमः । पुष्पायनमः । ततः शनिश्चःमासनमित्यादि





नीलीव्यतिरिक्तरंगरंजितंकृष्णंवस्त्रं । अगरुचंदनं । मल्लिकाकुसुमानि । तानिचजातीपुष्पसदृशाणि दीर्घपत्राणि ।
गुग्गुलकृतोधूपः । तिलमुद्गमिश्रःपक्वओदनोनैवेद्यं । उत्पत्तीफलं । ततःयमायनमः । प्रजापतयेनमः । महातेजसेनमः ।
रोहिणीभ्योनमः । ततोराहवेइदमासनमित्यादि । कृष्णंवस्त्रं । शनिपूजायामुक्तंचंदनं । कुटजपुष्पाणि । लाक्षाकृतो
धूपः । माषमिश्रओदनोनैवेद्यं नालिकेरफलं । ततःकालायनमः । सर्पेभ्योनमः । हुताशनायनमः । भरणीभ्योनमः ।
ततःकेतवेइदमासनमित्यादि । धुम्रवर्णवस्त्रं । चंदनंपूर्वोक्तमेवानानाविधपुष्पाणि । लाक्षाकृतोधूपविविधओदनो
नैवेद्यं । दाडिमफलं । ततःचित्रगुप्तायनमः । ब्रह्मणेनमः । हुताशनायनमः । अश्लेषाभ्योनमः । ततोलोकपालानां
पूजा । राहोउत्तरस्यांविनायकायेदमासनमित्यादि । शनैश्चरादुत्तरस्यां दुर्गायैइदमासनमित्यादि । सूर्यमंडलेसूर्यादुत्त
रस्यावायव्येनमः । राहोर्दक्षिणेतस्तन्मंडलेआकाशायनमः । केतुमंडलेदक्षिणस्यां अश्विभ्योमिदमासनमित्यादि । तत
उत्तरस्यांस्थापितंगरुत्मंतं ॐभूर्भुवःस्वःगरुत्मतेइदमासनमित्यादि सर्वोपचारैःसंपूज्यस्वस्वदिक्षुइंद्रादिदिक्पतीन्पूजयेत्।
इंद्रायइदमासनमित्यादिनामकारेण । एवंअग्नयेनमः । यमायनमः । निर्ऋतयेनमः । वरुणायनमः । वायवेनमः ।
कुबेरायनमः । इशानायनमः । ब्रह्मणेनमः । अनंतायनमः । एवंइंद्रादीन्सर्वोपचारैःसंपूज्यकुंभेवरुणंसर्वोपचारैःपूज
येत् । यत्रयत्रद्रव्यांतरविहितोधूपोभवति तत्रसर्वत्रअगरुःसौरभ्यार्थंदेयः । पूजांपरिसमाप्यग्रहवेदेरुपरिशोभनः फल
पुष्पोपेतवितानःस्थापनीयः । सर्वत्रःपूजायामुक्तद्रव्यालाभेप्रतिनिधिभूतंतत्तत्सदृशमुपादेयंचंदनपुष्पफलानि । ततआ
दित्यादीनांसपरिवाराणांपूजनकृतस्यविधेः सर्वंपरिपूर्णमस्तु इतिपूजापरिपूर्णमस्तु इतिपूजापरिपूर्णतांप्रार्थयेत् । ग्रहाणां
नैवेद्यदानावसरेनैवेद्यदानार्थंओदनादिपात्रांतरेउद्धृत्यनैवेद्यं निवेद्यशेषस्यहोमार्थंस्थापनंसर्वेषां ॥ ॥इत्यादित्यादिग्रहाणा
पूजा ॥ अथमंडपपूजा ॥ तत्रयजमानप्राङ्मुखउपविश्य आचम्यप्राणानायम्य देशकालौस्मृत्वा अस्मिन्लक्षहोमकर्मणि
मंडपस्तंभदेवानांद्वारतोरणशंखादि पताकाध्वजादिदेवानांसदिक्पतीनामहंकरिष्ये इतिसंकल्प्य । ईशानमध्यस्तंभे ।
एह्येहिविप्रेंद्रपितामहैशहंसाधिरूढत्रिदशैकवंद्य । श्वेतोत्पलाभासकुशांबुहस्तगृहाणपूजाभगवंनमस्ते । हंसपृष्ठसमारूढ

देवतागणपूजित ॥ ईशकोणस्थितस्तंभमलंकुरुजगत्पते ॥ ॐभूर्भुवःस्वः ब्रह्मन्निहागच्छ । ब्रह्मस्पतेरुक् । ब्रह्मजज्ञानं । ब्रह्मा । ब्रा२३ब्रासाम । ब्रह्मजज्ञानं । इहतिष्ठ । ब्रह्मणेनमः । इतिगंधं । पुष्पं । मानसिकंधूपं । मानसिकंदीपं । नैवेद्यं । ब्रह्मणेइदंनैवेद्यं । समर्पयामि । संपूज्यनमस्कुर्यात् । वेदाधारायवेदायज्ञानगम्यायसूरये । कमंडलवक्षमालाचस्रुचहस्ता यतेनमः । ततःप्रार्थना ॥ कृष्णाजिनांबरधरःपद्मासनश्चतुर्मुखः । जटाधरजगद्धातःप्रसोदकमलोद्भव । सावित्र्यैनमः। वास्तुदेवतायैनमः । ब्राह्म्यैनमः । गंगायैनमः । स्तंभशिरसिनागमान्नेनमः । आयंगौरिंतिशीखावंधनाद्यनुमंत्रणं । यतोयतःसमीहसइतिमंत्रेपाठः ॥ एवंसर्वस्तंभेषु ॥ ॥ आग्नेयमध्यस्तंभे ॥ आवाहयेत्तांगरुडोपरिस्थितंरमार्द्धदेहंसुरराज वंदितं ॥ कंसांतकंचक्रगदाब्जहस्तंभजामिदेवंवसुदेवसूनुं ॥ पद्मनाभरूपीकेशकंसचाणूरमर्दनं ॥ आगच्छभगवन्विष्णो स्तंभेस्मिन्सन्निधोभव । ॐभूर्भुवःस्वः विष्णोइहागच्छ । विष्णोर्नुकंवीर्याणिर्ऋक् । इदंविष्णुःयजुः । इहा६मेसामविष्णोः कर्माणिपश्यत । इहतिष्ठ । विष्णवेनमः । पूजनं । नमस्तेपुंडरीकाक्षनमस्तेपुरुषोत्तम । नमस्तेसर्वलोकात्मन्विष्णवेते नमोनमः ॥ इतिनत्वाप्रार्थयेत् । देवदेवजगन्नाथविष्णोयज्ञयतेविभो । पाहिदुःखाबुधेरस्माद्भक्तानुग्रहकारक । लक्ष्मै नमः । आदित्यनंदायैःविष्णवैः ॥ ततोनिर्ऋतिमध्यस्तंभे । एह्येहिगौरीशपिनाकपाणेशशांकमौलेवृषभाधिरूढ ! देवा धिदेवेशमहेशनित्यंगृहाणपूजांभगवंनमस्ते ॥ गंगाधरमहादेवपार्वतीप्राणवल्लभ ॥ आगच्छभगवन्नोशस्तंभेस्मिन्सन्निधो भवः । ॐभूर्भुवःस्वः शंकरइहागच्छ । परीणोरुद्रस्यहेतीर्ऋक । नमःशंभवाययजुः । आवोराजासाम । नमस्तेस्त्वायते । इहतिष्ठ । शंकरायनमः । इतिपूजा । वृषभवाहाषदेवायपार्वतीपतयेनमः ॥ वरदायार्द्धकायायनमश्चंद्रार्द्धमौलिने ॥ नमस्कारःप्रार्थना । पंचवक्त्रवृषारूढत्रिलोचनसदाशिव । चंद्रमौलेमहादेवममस्वस्तिकरोभव । गौर्यैनमः । महेश्वर्यै० शोभनायै० ॥ ॥ ततोवायव्यमध्यस्तंभे ॥ एह्येहिवृत्रघ्नगजाधिरूढसहस्रनेत्रत्रिदशैकराज । शचीयतेशक्रसुरेशनित्यं गृहाणपूजांभगवन्नमस्ते । शचीपतेमहाबाहोसर्वाभरणभूषित । आगच्छभगवन्निंद्रस्तंभेस्मिन्सन्निधोभव । इंद्रइहागच्छ । मंत्रातारमिंद्ररुक् । इहांइंद्रोवज्रहस्तयजुः । इंद्रान्नारोसाम । इंद्रमहंवणिजं । इहतिष्ठ । इंद्रायनमः । पूजनं । पुरंदर





नमस्तेस्तुवज्रहस्तनमोस्तुते ॥ शचीशस्वेनमस्तुभ्यंनमस्तेमेघवाहनइतिनमस्कारः। प्रार्थना । देवदेवगजारूढपुरंदरशत कृते । वज्रहस्तमहाबाहोवांछितार्थप्रदोभव । इंद्राण्यै० आनंदायै० विभूत्यै० ॥ ततोवाह्यस्थ ईशानकोणादारभ्य ॥ द्वादशस्तंभान्पूजयेत् ॥ बाह्यईशानस्तंभे ॥ आवाहयेत्तंद्विभुजंदिनेशंसप्ताश्ववाहंद्युमणिग्रहेशं । सिंदूरवर्णप्रतिभावभासं भजामिसूर्यंकुलवृद्धिहेतोः ॥ पद्महस्तमहाबाहोसप्तश्वेताश्ववाहन । आगच्छभगवन्भानोस्तंभेस्मिन्सन्निधोभव ॥ ॐभू र्भुवःस्वःसूर्यइहागच्छ । चित्रंदेवानांरुक् । आकृष्णेनरजसायजुः । उदुत्यम् । ॐहायिसाम् । उदस्यकेतवोदिवि । इहतिष्ठ । सूर्यायनमइतिपूजनं । नमःसवित्रेजगदेवचक्षुषेजगत्प्रसूतिस्थितिनाशहेतवे । त्रयीमयायत्रिगुणात्मधारिणेविरंचिनारा यणशंकरात्मने । नमस्कारः । पद्महस्तरथारूढपद्मासनमंगलं ॥ कृपांकुरुदयालोत्वंग्रहराजनमोस्तुते । प्रार्थना । गौर्यै नमः । भूत्यैनमः । सावित्र्यैनमः । मंगलायैनमः। ईशानपूर्वयोस्तरालस्तंभे । आवाहयेत्तंगणराजदेवंरक्तोत्यलाभा समशेषवंद्यं । विघ्नातकंविघ्नहरंगणेशंभजामिरौद्रंसहितंचसिध्या । लंबोदरमहाकायगजवक्त्रचतुर्भुज । आगच्छत्वंजगन्नाथ स्तंभेस्मिन्सन्निधोभवः ॥ ॐभूर्भुवःस्वःगणपतेइहागच्छ । गणानांत्वाउभयोः । आतूनआसामः । गणास्त्वोपगायंतु । इहतिष्ठ । गणपतयेनमः । पूजनं । नमस्तेब्रह्मरूपायविष्णुरूपायतेनमः । नमस्तेरुद्ररूपायकरिरूपायतेनमः । नमस्कारः। लंबोदरमहाकायसततंमोदकप्रिय । गौरीसुतगणेशत्वंविघ्नराजप्रसीदमे ॥ प्रार्थना । रसस्वत्यैनमः । विघ्नहारिण्यैनमः। जयायैनमः । पूर्वाग्नेययोरंतरालस्तंभे ॥ एह्येहिदंडायुधधर्मराजकालांजनाभासविशालनेत्र । विशालवक्षस्थलरुद्ररूप ग्रहाणपूजांभगवन्नमस्ते । चित्रगुप्तादिसंयुक्तदंडमुद्गरधारकः । आगच्छभगवनधर्मस्तंभेस्मिन्सन्निधोभव । ॐभूर्भुवःस्वः यमइहागच्छ । यस्मिन्वृक्षेतिरुक् । यमायत्वायजुः । आ२याम् । अयायम् । इतिसाम । यमोमृत्युरघमारो । इहतिष्ठ । यमायनमः । पूजनं । ईषत्पीननमस्तेस्तुदंडहस्तनमोस्तुते । महिषस्थनमस्तेस्तुधर्मराजनमोस्तुते । नमस्कारः । धर्म राजमहाकायदक्षिणाधिपतेनमः । रक्तेक्षणमहाबाहोममपीडांनिवारय । प्रार्थना । पूर्वसंध्यायै० जन्यैःक्रूरायै०नियत्र्यै०॥ ब्राह्मणाग्निकोणस्तंभे ॥ एह्येहिनोगेंद्रधराधरेशसर्वामरैर्वंदितपादपद्म । नानाफणामंडलराजमानगृहाणपूजांभगवन्नमस्ते।

आशीविषसमोपेतनागकन्याविराजित । आगच्छनागराजेन्द्रस्तंभेस्मिन्सन्निधोभव । नागराजइहागच्छ । कालिको
नामसर्पेत्यृक् । नमोस्तुसर्पेभ्योयजुः । अभांय्मिाहेसाम । स्वप्नस्वप्नाभिकरणे । इहतिष्ठ । नागराजायनमःपूजनं ।
नमःखेटकहस्तेभ्यस्त्रिभोगेभ्योनमोनमः ॥ नमोभीषणदेहेभ्यःखड्गधृत्योनमोनमः । नमस्कारः । खड्गखेटकधराःसर्वाः
फणामंडलमंडिताः ॥ एकभोगाःसाक्षसूत्रावरदाः संतुमेसदा ॥ प्रार्थना । मध्यमसंध्यायैनमः । धरायैनमः । पद्मायै
नमः । महापद्मायैनमः ॥ आग्नेयदक्षिणयोरंतरालस्तंभे ॥ आवाहयामिदेवेशंषण्मुखंकृत्तिकासुतं ॥ रुद्रतेजसमुत्पन्नंदेव
सेनासमन्वितं । मयूरवाहनंशक्तियाणीवैब्रह्मचारिणं । आगच्छभगवन्स्कंदस्तंभेस्मिन्सन्निधोभव । ॐभूर्भुवःस्वः
स्कंदइहागच्छ । वलित्थापर्वतानांयदक्रंदयजुः । राजानसामाहुम् ।३। हो।३। ह२।३॥ अग्निरिवमन्यो । इहतिष्ठ । स्कंदाय
नमः । पूजनं । नमस्कारः । मयूरवाहनास्कंदगौरीसुतषडानन । कार्त्तिकेयममहाबाहोदयांकुरुदयानिधे । प्रार्थना ।
पश्चिमसंध्यायैनमः ॥ दक्षिणनैर्ऋत्यांतरालस्तंभे ॥ आवाहयामिदेवेशंभूतानांदेहधारिणं ॥ सर्वाधारंमहावेगंमृगवाहन
मीश्वरं ॥ ध्वजहस्तंगंधवहंत्रैलोक्यांतरचारिणं । आगच्छभगवन्वायोस्तंभेस्मिन्संनिधोभवं । ॐभूर्भुवःस्वः वायोइहा
गच्छ । वायवायाक्रृक् । तववायबृहस्पतेयजुः । वातआवातुसाम । वायोःपूतःपवित्रेण । इहतिष्ठ । वायवेनमः । नमो
धरणिपृष्ठस्थसमीरणनमोस्तुते । धूम्रवर्णनमस्तेस्तुशीघ्रगामिनमोस्तुते । नमस्कारः । धावधरणिपृष्ठस्थध्वजहस्तसमी
रण । दंडहस्तमृगारूढवरंदेहिवरप्रदः । प्रार्थना । वायव्यै० गायत्र्यैन० मध्यमसंध्यायै० ॥ निर्ऋतिस्तंभे ॥ आवाहयामि
देवैशंशशांकरजनीपति ॥ क्षीरोदधिसमुद्भूतंहरमौलिविभूषणं । सुध्याकरंद्विजाधीशत्रैलोक्यमितिकारकं ॥ औषध्या
प्यायनकरंसोमकंदर्पवर्धनं । आगच्छभगवंत्सोमस्तंभेस्मिन्सन्निधोभव । सोमइहागच्छ । आप्यायस्वसमेत्यृक् । इयमेव
यजुः । चंद्रमाआउवा । साम । सोमायनमइतिपूजनं । अत्रिपुत्रनमस्तेस्तुनमस्तेशशलांछनं ॥ श्वेतांबरनमस्तेस्तुतारा
धियनमोस्तुते ॥ नमस्कारः ॥ अत्रिपुत्रनिशानाथद्विजराजसुधाकरः । सोमत्वंसौम्यभावेनग्रहपीडानिरांकुरु ॥
प्राथना ॥ सावित्र्यैनमः । अमृतकलायैनमः । पश्चिमसंध्यायै० ॥ निर्ऋतिपश्चिमयोमध्येस्तंभे ॥ आवाहयामिदेवेशं





सलिलस्याधिपंप्रभुं ॥ शंखपाशधरंसौम्यंवरुणंयादशांपतिं । कुंभीरथसमारूढंमणिरत्नसमन्वितं । आगच्छदेववरुणस्तंभे
स्मिन्सन्निधोभव । ॐभूर्भुवःस्वः वरुणइहागच्छ । तत्वायामिवरुणात्यृक् । इमंमेवरुणयजुः । यदाकदासाम । निररग्निं
सवितासाविषक् । इहतिष्ठ । वरुणायनमः । पूजनं । वरुणायनमस्तेस्तुनमःस्फटिकदीप्तये । नमस्तेश्वेतहारायजले
शायनमोनमः । नमस्कारः । शंखस्फटिकवर्णाभश्वेतहारांबरावृत । पाशहस्तमहाबाहोदयां कुरुदयानिधे ॥ प्रार्थना ॥
वारुण्यै० । पाशधारिण्यै० बृहस्पत्यै० ॥ पश्चिमवायव्यांतरालस्तंभे ॥ आवाहयामिदेवेशान्वसूनष्टौमहाबलान सौम्य
मूर्तिधरान्देवान्दिव्यायुधकरान्वितान् । शुद्धस्फटिकसंकाशान् नानावस्तुविराजितान् । अश्वारूढान्दिव्यवस्त्रात्सर्वा
लंकारभूषितान् । आवाहयामिस्तंभेस्मिन्वसवोष्टौसुखावहान । ॐभूर्भुवःस्वः वसवइहागच्छतासुगावोदेवात्यृक् । वस
वस्त्वाकृणवतुयजुऋक् । इदंवसाउ । अस्मिन्वसुवो । इहतिष्ठत । वसुभ्योनमः । पूजनं । नमस्करोमिदेवेशान् नाना
वसुविराजितान् । शुद्धस्फटिकसंकाशान्दिव्यायुधकरान्वसून् । नमस्कारः ॥ दिव्यवस्त्रादिव्यदेहाःपुष्पमालाविभूषिताः।
वसवोष्टौमहाभागावरदासंतुमेसदा ॥ प्रार्थना ॥ विनतायै० अणिम्ने० भूत्यै० गरिम्णे० ॥ वायवस्तंभे । आवाहयामि
देवेशंधनदंयक्षपूजितं । महामलंदिव्यदेहंनरयानगतंविभुं० । दिव्यमालांबरधरंगदाहस्तमहाभुजं । आगच्छयक्षराजस्त्वं
स्तंभेस्मिन्सन्निधोभव ॥ ॐभू० धनदइहागच्छ । सोमोधेनुमृक् । सोमोधेनुयजुः । तवाहंसौसाम । सोमोराजावरुणो
राजा । इहतिष्ठ । धनदायनमः । पूजनं । यक्षराजनमस्तेस्तुनमस्ते नरयानग । पीतांबरनमस्तेस्तुगदापाणेनमस्तुते ।
नमस्कारःदिव्यदेहधनाध्यक्षपीतांबरगदाधर उत्तरेशमहाबाहोवांछितार्थफलप्रदप्रार्थना । आदित्यै० लघिम्ने० सिनि
वाल्यै०॥ उत्तरवायव्ययोरंतरालस्तंभे ॥ आवाहयामिदेवेशंगुरुंत्रिदशपूजितं । हेमगोरोचनावर्णपीतस्कंधसुवक्षसं ।
शंखंचकलशंचैवपाणिभ्यामिहबिभ्रतं बृहस्पतेसमागच्छस्तंभेस्मिन्सन्निधोभवः । ॐभू० बृहस्पतेइहागच्छ । इंद्रआसात्यृक् ।
बृहस्पतेअतियजुः । इंद्रआंसान्नेतासामवेदेत्यृक् । अर्यमणंबृहस्पति । इहतिष्ठ । बृस्पतयेनमः । पूजा । ब्रह्मपुत्रनमस्ते
स्तुपीतध्वजनमोस्तुते । त्रिदशार्चितदेवेशंसिंधूद्भवनमोस्तुते । नमस्कारः । पूजितोसियथाशक्त्यादंडहस्तबृहस्पते । क्रूर

ग्रहाभिभूतस्यशांतिदेवगुरोकुरु । प्रार्थना । पूर्णमास्यै० । सावित्र्यै० ॥ उत्तरेशानयोरंतरालस्तंभे ॥ आवाहयामिदेवेश
विश्वकर्माणमीश्वरं ॥ मूर्त्तामूर्त्तकरंसर्वकर्तारमीश्वरंविभो । त्रैलोक्यसूत्रकर्त्तारद्विभुजंसर्वदर्शिनं । आगछविश्वकर्मस्त्वं
स्तंभेस्मिन्सन्निधोभव । ॐभूर्भु०विश्वकर्मनइहागछ । विश्वकर्मन्हविषाऋक् विश्वकर्मविमनायजुः । विश्वकर्मन्हविषा
सामवेदेऋक् । यज्ञस्यचक्षुःप्रभृत्तिर्मुखंच । इहतिष्ठ विश्वकर्मणेनमः । पूजनं । नमामिविश्वकर्माणंद्विभुजंसर्वदर्शिनं ।
त्रैलोक्यसूत्रकर्त्तारंमहांबलपराक्रमं । नमस्कारः । प्रसीदविश्वकर्मस्त्वंशिल्पिशास्त्रविशारद । सदंडपाणेद्विभुजेतेजोमूर्त्ति
धरप्रभो । प्रार्थना । सिनीवाल्यै० वास्तुदेवतायै० सावित्र्यै० ॥ ततःपुष्पांजलिंगृहीत्वा ॥ इदंविष्णुरितिपठित्वामंडपे
पुष्पांजलिंविन्करेत् ॥ इतिषोडशस्तंभपूजा ॥ अथतोरणपूजा ॥ मंडपस्यपूर्वदाराद्धस्तमात्रोपरिन्यस्ततोरणस्यपार्श्वे
यथाविधिनाकलशंसंस्थाप्य । तोरणस्यपार्श्वद्वयेराहुमावाहयामिइतिराहुमावाहयेत् । बृंहस्पतिमावाहयामिइतिबृहस्पति
तत्रावाह्यपूजयेत् । कलशेध्रुवमावाहयामिइतिध्रुवमावाह्यध्रुवद्यौरिपिध्रुवंपूजयेत् । सुहृढतोरणायनमः । तत्रकृतयुगाय
नमः ॥ दक्षिणशाखायांधात्रेनमः । उत्तरशाखायांविधात्रेनमः । उर्ध्वौदुंबरेगणेशायनमः । अधद्वारश्रियैनमः । उप
रिस्थंशंखंमंत्रेणपूजयेत् । अग्निर्ऋषिरितिमंत्रः । संपूज्यप्रार्थयेत् । पूजितोसिमयादेवशिवोभववरप्रद । रिपून्निवारया
शुत्वयज्ञरक्षाकरोभव ॥ अथदक्षिणतोरणपूजा ॥ तत्रकलशस्थापनं । तस्मिन्पृथिवीमावाह्यस्योनापृथिवीतिमंत्रेणपूजनं ।
सूर्यायनमः । भौमायनमः । विकटतोरणायनमः । धातारंदक्षिणशाखायांविधातारं वामशाखायांऊर्ध्वेगणेशायेति
संपूज्यअधःद्वारश्रियै०शाखामस्तकेःचक्रंयदस्येतिचक्रस्यपूजनं ॥ चक्रायनमः । सुदर्शनमहाज्वालसूर्यकोटिसमप्रभ
निवार्यविघ्नसंघानियज्ञरक्षाकरोभव ॥ ॥ अथपश्चिमतोरणपूजा ॥ तत्रकलशं संस्थाप्य बृहस्पतिमावाह्यपूजयेत् । शुक्राय
नमः । बुधायनमः भीमाख्यतोरणायनमः । हेमकूटाचलायनमः । द्वापरयुगायनमः । यदाकदेतिवरुणायनमः । पूर्ववत्
शाखयोःपूजा । मस्तकेउभयेदिंद्ररोदसीइतिगदायैनमः । प्रार्थना । विष्णुनाविधृतामित्वंदुष्टदैत्यानिषूदिनि । यज्ञाद्यान्वा
रयाशुत्वंयज्ञरक्षाकरीभव ॥ अथोत्तरतोरणपूजा ॥ कलशंसंस्थाप्यतत्रविघ्नेशमावाह्यमंत्रेणपूजयेत् । सोमाय०शनैश्चराय०





केतुभ्यो०सुप्रभतोरणायनमः । हिमाचलायनमः । कलियुगनाम्नेयुगायनमः । शाखापूजाचपूर्ववत् । मस्तकेसहस्र
शीर्षेतिपद्मायनमः । विष्णुनाविधृतंपद्मविष्णोः प्रीतिविवर्द्धनं । पूजनस्यपात्अन्नस्यदेवोरक्षतुसर्वतः ॥ इतितोरणपूजा ॥
अथद्वारपूजासदिक्पाला ॥ पूर्वद्वारेकलशद्वयंसंस्थाप्यकलशद्वये ऐरावतमावाह्यपूजयेत् ॥ गंगायैनमः । यमुनायैनमः ।
ऋग्वेदिनावत्रवापूज्यौ । सुमंगलनाम्नेपूर्वद्वारायनमः । दक्षिणशाखायांधात्रेनमः । वामशाखायांविधात्रेनमः । उर्ध्वे
गणपतये० । अधोदेहल्यांद्वारश्रियै० । द्वारमध्येवास्तुपुरुषायनमः । एवंसंपूज्यकलशेइंद्रमावाह्यपूजयेत् ॥ एह्येहिसर्वा
मरसिद्धसाध्यैरभिष्टनोवज्रधरामहेशः ॥ संवीज्यमानोप्सरसांगणेनरक्षाध्वरंनोभगवन्नमस्ते । भोइंद्रइहागछेहतिष्ठ
इत्यावाह्यत्रातारमिंद्रमितिइंद्रंसर्वोपचारैरभ्यर्च्यआशुःशिशानेतिजयायैनमः । इतिपताकांत्रातारमिंद्रमितिकुमुदायनमः ।
इतिध्वजंसंपूज्यइंद्रंनमस्कुर्यात् । इद्रःसुरपतिःश्रेष्ठोवज्रहस्तोमहाबलः ॥ शतयज्ञाधियोदेवस्तस्मैनित्यंनमोनमः । इति
नत्वाइंद्रासांगायसायुधायसवाहनाय सशक्तिकामायइमंबलिंसमर्पयामि । इतिबलिंसमर्पयामि । हस्तौप्रक्षाल्याचम्य ।
आग्नेयेगत्वाकलशंसंस्थाप्यपुंडरीकायनमः । अनंतायनमः । इतितत्रपूजयेत् । ततःछागस्थमग्निरक्तवर्णध्यात्वाकलशे
आवाहयेत् । एह्येहिसर्वामरहव्यवाहमुनिप्रवर्यैरभितोभिजुष्ट । तेजोवतालोकगणेनसार्द्धममाध्वरंपाहिकवेनमस्ते ।
भोअग्नेइहागछेहतिष्ठ इत्यावाह्यअग्निस्तिग्मेनेति अग्नयेनमः संपूज्य । अग्निंदूतमितिविजयायैनमः इतिपताकांअग्नि ।
स्तिग्मेनेतिकुमुदाक्षायनम इतिध्वजंपूजयेत् । आग्नेयःपुरुषोरक्तः । सर्वदेवमयोव्ययः । धूमकेतुरजोध्यक्षस्तस्मैनित्यं
नमोनमः । इतिनत्वासांगायेत्याद्युक्त्वा अग्नयेइमंबलिसमर्पयामि ॥ ततःआचम्यदक्षिणद्वारेगत्वा कलशद्वयंसंस्थाप्य
वामनायनम इतिपूजयेत् ॥ गोदावर्यैनमः । कृष्णायै०याजुषावत्रवापूज्यौ । धर्मिष्टाभिधायदक्षिणद्वारायनमः । शाखा
पूजापूर्ववत । ततःकलशेयमंश्यामंदंडहस्तंमहिषारूढंध्यात्वाआवाहयेत् ॥ एह्येहिवैवस्वतधर्मराजसर्वामरैरर्चितधर्मसूर्त्ते ।
शुभाशुभानंदशुचामधीशशिवायन० पाहिमखंनमस्ते । भोयमइहागछेहतिष्ठ हत्यावाह्यनाकेसुपर्णमितिपुंडरीकायनमः
इतिध्वजं । ततःप्रार्थना । महामहिषमारूढं दंडहस्तंमहाबलं । आवाहयामि यज्ञेस्मिन्पूजेयंप्रतिगृह्यतां । सां[illegible]ायेत्याद्युक्त्वा

यमायेमंवलिंसमर्पयामि । ततआचम्यनैर्ऋत्यांकलशंसंस्थाप्यतत्रकुमुदायनमः । दुर्जयायनमइतिसंपूज्य । नरारूढंखङ्ग
हस्तंनिर्ऋतिमावाहयेत् ॥ एह्येहिरक्षोगणानायकस्त्वंविशालवैतालपिशाचसंघैः । ममाध्वरंपाहिपिशाचनाथलोकेश्वरस्त्वं
भगवन्नमस्ते ॥ भोनिर्ऋतिइहागच्छेहतिष्ठ । इत्यावाह्यवेत्याहीत्तिमंत्रेण निर्ऋतयेनमइतिनिर्ऋतिंसर्वोपचारैरभ्यर्च्यवेत्था
हीतिधृत्यैनमइतिपताकांपूजयेत् । अनेनैवमंत्रेणवामनायनम इतिध्वजंपूजयेत्। ततःप्रार्थना। निर्ऋतिखङ्गहस्तंचसर्वलोकैक
पावनं । आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यतां। इतिसंप्रार्थ्यसांगायेत्याद्युक्त्वानिर्ऋतयेइमंबलिंसमर्पयामि। ततआचम्य
पश्चिमद्वारेगत्वातत्रकलशद्वयंसंस्थाप्य । अंजनायनमः । पूजयेत् । कलशद्वयेरेवायैनमः । ताप्यैनमः । सामगोद्वावत्रवा
पूज्यौ । ततोजयसाधनाभिधाय पश्चिमद्वारायनमः । शाखापूजापूर्ववत् । ततोमकरस्थंपाशहस्तंशुक्लवर्णंकिरीटिनंवरणं
ध्यात्वाकलशेआवाहयेत् । एह्येहियादोगणवारिधीनांगणेनपर्जन्यसहाप्सरोभि । विद्याधरेंद्रामरगीयमानापाहिक्ष्म
स्मान्भगवन्ननमस्ते । भोवरुणइहागच्छेहतिष्ठ । घृतवतीइतिवरुणायनमइतिवरुणंसर्वोपचारैःसंपूज्यइमंमेवरुणेतिमेधायै
नमइतिपताकांपूजयेत् । यदाकदेतिशंकुकर्णायनम इतिध्वजंपूजयेत् । ततःप्रार्थना । पाशहस्तंचवरुणंधर्मसांपतिमीश्वरं ।
आवाहयामियज्ञेस्मिन्वरुणायनमोनमः । इतिसंप्रार्थ्यसांगायेत्याद्युक्त्वा वरुणायेमंबलिंसमर्पयामि । ततःआचम्य
वायव्यांकलशंसंस्थाप्यतत्रपुष्पदंतायनमः । सिद्धार्थायनमः । इतिसंपूज्य । मृगारूढंधूम्रवर्णंवायुंध्यात्वा आवाहयेत्
एह्येहियज्ञेममरक्षणायमृगाधिरूढं सहसिद्धसंघैः । प्राणाधिपःकालकवैःसहायगृहाणपूजांभगवन्नमस्ते । भोवायोइहा
गच्छेहतिष्ठइत्यावाह्यवातआवात्विितिवायवेनम इतिवायुसर्वोपचारै रभ्यर्च्यप्राणाशिशुरितिसरस्वत्यैनम पताकांपूजयेत् ।
वातआवात्विितिचित्रायनमइतिध्वजंसंपूज्यप्रार्थयेत् । वायुमाकाशगंचैवपवनंवेगवद्गतिं ॥ आवाहयामियज्ञेस्मिन्पूजेयं
प्रतिगृह्यतां ॥ अनाकारोमहौजाश्चयश्चादृष्टिगतिर्दिवि ऽतस्मैपूज्यायमहते वायवेहंनमामिच । सांगायेत्याद्युक्त्वावायवे
इमंबलिंसमर्पयामि। ततआचम्यउत्तरद्वारेकलशद्वयंसंस्थाप्य। सर्वभौमायनम इतिदिग्गजंसंपूज्य कलशद्वयेवारुण्यैनमः।
वेण्यैनमः । इतिसंपूज्य । अथर्ववेदिनौद्वावत्रवापूज्यौ । कल्याणाभिधायोत्तरद्वारायनमः । शाखयोः पूजापूर्ववत् ।





ततोनरयुतविमानस्थंकुबेरंध्यात्वाकलशेआवाहयेत् ॥ एह्येहियज्ञेश्वरयज्ञरक्षाविधस्वनक्षत्रगणेनसार्द्धं । सर्वौषधीभिः
पितृभिःसहैवगृहाणपूजांभगवंनमस्ते। भोसोमइहागच्छेहतिष्ठ। तवाहंसोमेतिसोमायनमः। इतिसोमंसर्वोपचारैरभ्यर्च्य।
आप्यायस्वेतितुष्ट्यैनम इतिपताकांसंपूज्यतवाहंसोमेतिसर्वदेवायनमइतिध्वजंपूजयेत् । ततःप्रार्थना । सर्वनक्षत्रमध्येतु
सोमेराजाव्यवस्थितः । तस्मैसोमायदेवायनक्षत्रपतयेनम इतिनत्वासांगायेत्याद्युक्त्वा सोमायेमंबलिंसमर्पयामि ॥ आच
म्यऐशान्यांगत्वाकलशंसंस्थाप्य । तत्रसुप्रतीकायनमः। मंगलायनमःइतिसंपूज्यतस्मिन्वृषारूढंत्रिनेत्रंशुभ्रवर्णंईशानंध्या
त्वाआवाहयेत् । एह्येहियज्ञेश्वरनस्त्रिशूलीकपालखट्वांगगणेनसार्द्धं । लोकेशयज्ञेश्वरयज्ञसिध्यैगृहाणपूजांभगवन्नमस्ते ।
भोइशानइहागच्छहतिष्ठ । अभित्वाशूरेतिसुमुखायनम इतिध्वजंपूजयेत् । ततोनमस्कारः ॥ वृषस्कंधसमारूढईशानः
शुक्लईश्वरशूलपाणिर्विरूपाक्षस्तस्मैनित्यंनमोनमः। सांगायेत्याद्युक्त्वाईशानायेमंबलिसमर्पयामि । ततआचम्य। निर्ऋति
वरुणयोर्मध्ये अनंतशयनीयेसमासीनं नीलवर्णंध्यात्वा ॥ एह्येहिपातालधरामरेंद्रनागांगनाकिंनरगीयमानं ॥ रक्षोरगेंद्रो
मरलोकसंघैरनंतरक्षाध्वरमस्मदीयं । भोअनंतइहागच्छेहतिष्ठेतितत्रावाह्ययांसंधामिति अनंतायनमअनंतसर्वोपचारैरभ्य
र्च्ययांसंधामिति शांतायैनमइतिपताकांसंपूज्य अतोदेवाइतिविमुखायनम इतिध्वजंपूजयेत् । ततःप्रार्थना । योसावनंत
रूपेणब्रह्मांडंसचराचरं ॥ पुष्पवद्धारयेन्मूर्ध्नितस्मैनित्यनमोनमः । इतिनत्वासांगायेद्युक्त्वा अनंतायेमंबलिंसमर्पयामि ।
इतिबलिंदद्यात् । ततःआचम्य इंद्रईशानयोर्मध्येहंसस्थंरक्तवर्णंब्रह्माणंध्यात्वा ॥ एह्येहिसर्वाधिपतेसुरेंद्रलोकेनसार्द्धंपितृ
देवताभिः । सर्वस्यधातास्यमितप्रभावोविशाध्वरंनः सततंशिवाय । भोब्रह्मन्इहागतेहतिष्ठ इत्यावाह्यमयिवर्चइतिब्रह्मणे
नमइतिब्रह्माणं सर्वोपचारैरभ्यर्च्य ब्रह्मजज्ञानमितिगायत्र्यैनम इतिपताकांमयिवर्च इतिसुप्रभायनम इतिध्वजंसंपूज्य
नमस्कुर्यात् । पद्मयोनिश्चतुर्मूर्त्तिर्वेदावासपितामहः। यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मैनित्यंनमोनमः। इतिनत्वासांगायेत्याद्युक्त्वा
इमंबलिंसमर्पयामि ॥ इतिबलिंसमर्पयामि । इतिबलिंदद्यात् ॥ ततोमंडपमध्येब्रह्मजज्ञानमिति महाध्वजंसंपूज्यवंशे
किंनरेभ्योनमः । पृष्ठेपन्नगेभ्योनमः । इतिपूजयेत्॥ ततोमंडपात्पूर्वस्थांकिंचिद्भूमिमुपलिप्यतत्रोपविश्या त्रैलोक्येयानि

भूतानिस्थावराणिचराणिच । ब्रह्मविष्णुशिवैः सार्द्धंरक्षांकुर्वंतुतानिमे ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः । ऋषयो
मनवोगावोदेवमातरएवच । सर्वेममाध्वरेरक्षांप्रकुर्वंतुमुदान्विताः । ब्रह्मा विष्णुश्चरुद्रश्चक्षेत्रपालगणैसह । रक्षंतुमंडपंसर्वेघ्नंतु
रक्षांसिसर्वतः । इतिसंप्रार्थ्यश्लोकोक्तान्देवान्नाममंत्रैस्तस्यांभूमौचंदनादिभिःपूजयेत् । त्रैलोक्यस्थेभ्यश्चरेभ्योभूतेभ्यो
नमः । ब्रह्मणेनमः । विष्णवेनमः शिवायनमः । देवेभ्योनमः । दानवेभ्यो । गंधर्वेभ्यो० यक्षेभ्यो० राक्षसेभ्यो०
ऋषिभ्यो० गोभ्यो० । देवमातृभ्यो० एवंप्रत्येकमेतान्संपूज्य एतैरेवनाममंत्रैस्तस्यांभूमा । वेतेभ्योबलिंदद्यात । त्रैलोक्य
स्थेभ्यः स्थावरेभ्योभूतेभ्य इमंबलिंसमर्पयामि । एवंसर्वत्रएवंबलिदानंकृत्वाप्रक्षालितपाणिपाद आचम्यपूजापरिपूर्णतां
प्रार्थयेन्प्राग्द्वारेणमंडपंप्रविशेत् ॥ ईतिमंडपपूजा ॥ ततः आचार्यःपवित्रातर्हितंचरुमभिघार्यउदगुद्वास्यप्रत्यभिघारयेत् ।
ततःपरिस्तरणं । पुरस्ताद्दक्षिणतउत्तरतःपश्चादिप्रकारेण । उत्तरतःप्रणीतासादनं । इध्माधानं । आज्यसंस्कारतःपूर्व
माज्येमपरःस्थालीपाकः । अदितेनुमन्यस्वेत्यादिमंत्रैःप्रसेकः । देवसवितरितिपर्युक्षणं । तपश्चतेजश्चेत्यादिप्रपद्वैरूपाक्ष
जपः । स्रुवस्रूक्मेक्षणानांसंमार्गः । अथानैकर्त्विकहूयमानद्रव्येप्रत्याहुतित्यागासंभवादादावेवसमुदायेनद्रव्यत्यागः
कार्य । यथा । इदंचबाज्यसमित्तिलयवव्रीहिफलपायसादिहोमार्थमुपकल्पितं अग्निसोमसबितृसोमभोमबुधबृहस्पतिशुक्र
शनैश्चरराहुकेत्वीश्वरोमास्कंद विष्णुब्रह्मेंद्रयमकालचित्रगुप्ताग्न्यापधरा विष्णेंद्राणीप्रजापतिसर्प ब्रह्मविनायकदुर्गावा
य्वाकाश्विकुमारेंद्राग्नि यमनिर्ऋतिवरुणवायुकुबेरैशान ब्रह्मानंतगरुडव्याहृतीनाग्नयेस्वाहा सोमायस्वाहेत्याज्यभागौ ।
ततआदित्यायस्वाहा सोमायस्वाहेत्येवंचतुर्गृहीतेनचरुहोमः । ततोश्चरुस्थाल्यांघृतमापूर्यपिधाय सुनिश्चलदेशेचरुस्था
लीन्यस्तव्या । यथासमाप्तिदिवसेचरुशेषेणस्विष्टकृद्धोमोभवति । ततोग्रहमंत्रैराज्याहुतयः प्रतिग्रहमष्टावष्टौ । अधि
देवतानांतिस्रस्तिस्र आज्याहुतयः । ततः आदित्यादीनांस्वस्वमंत्रैरर्कादिसमिद्धोमः प्रत्येकमष्टोत्तरशतसंख्यया । ताश्च
दधिमध्वाज्यलिप्ताः । समिद्धोमानंतरंस्वस्वनैवेद्यशेषाणां स्वस्वमंत्रैरष्टावष्टावाहुतयोहोतव्याः । ततोव्याहृतिभिर्होमः ।
तत्रादावुपकल्पितहोमद्रव्येणसूर्यादिग्रहाणांमंत्रैः प्रतिग्रहंदशदशाहुतयोहोतव्याः । अधिदेवानांच । ततोहोमारंभादौ





सकृदुच्चरितप्रणवाभिर्व्याहृतिभिर्व्यस्ताभिः समस्ताभिः समस्ताभिश्चेतिचतस्र आहुतयइत्येवमुपकल्पितादिद्रव्येणसमि
त्संख्याव्यतिरेकेण लक्षाहुतिसंख्यापूर्त्तिपर्यंतं सावधानायजमानस्याभीष्टं सिध्यत्वितिमनसाध्यायंतो वाग्यतादक्षिणंजा
न्वाच्यअंतर्भानुकृतकराउपविष्टायज्ञोपवीतिनः पूर्वाह्णेहोमंकुर्युः । व्याहृतीनांविश्वामित्रजमदग्निभरद्वाजागायत्र्युष्णिग
नुष्टुबग्निवायुसूर्याः समस्तानांप्रजापतिः । होमेविनियोगः । होमसमाप्तिपर्यंतंप्रतिदिनहोमाद्यंतयोः पीठस्थदेवानां
चंदनपुष्पादिभिःपूजाकार्या । अग्नेश्चहोमसमाप्तियावद्भिर्दिनैर्भवतितावद्भिःकार्याः । नतत्रदिनसंख्यानियमः नाकेसु
पर्णमितिगरुडप्रीतयेहोमः वास्तोष्पतेतिमंत्रेणवास्तुप्रीतयेहोमोयथेच्छयाकर्त्तव्यः । एवंत्र्यंबकमंत्रेणलक्ष्मीप्रीतयेश्रीरसी
तिमंत्रेणगणपतिप्रीतयेमोदकैर्होमः । पायसान्नेनप्रतिश्लोकंचंडीपाठेन । एतत्सर्वमाचारप्राप्तं । होमसमयेद्वारपालानां
जपउक्तः । यथा । हिरण्यवर्णमित्यादिश्रीसूक्तं । स्वादिष्टयामदिष्टयेत्यादिपावमानाख्यंसोमसूक्तं । कनिक्रदज्जनुष
मित्यादिसुमंगलं । शन्नइंद्राग्नीइत्यादिसर्वत्रायंशांत्याध्यायः । योजातएवेत्यादिइंद्रसूक्तं । कृणुष्वपाजइत्यादिरक्षोघ्नं
ऽएतानिऋग्वेदे ॥ अथयजुर्वेदेजप्यादि ॥ नमस्तेरुद्रमन्यवइत्यादिरुद्रसूक्तं । सहस्रशीर्षेत्यादिपुरुषसूक्तं देवसवितरि
त्याद्यध्यायःश्लोकाध्यायः । ऋचंवाचमित्यादिशुक्रिय । यदेतन्मंडलमित्यादिमंडलाध्यायः ॥ अथसामवेदे ॥ कयानश्चि
त्रेतिवामदेव्यं । ॐहोयित्वामिद्धिहवामहाएइत्यादिबृहत्साम आज्यदोहमित्यादीनित्रीणिज्येष्ठसामानि । आभित्वा
शूरनोनुमोवाइतिरथंतरं । उहुवाहाउ ।३सहस्रशीर्षा । पुरू२३षाः । इत्यादीनिपंच । अस्मींनस्मिन्इत्येकं । एवंषट्
पुरुषसूक्तसंज्ञानि । आवोराजाइत्याद्येकादशसामात्मकंरुद्रसूक्तं । अबोधियाइत्यादिशांतिसूक्तं उद्वयाम् । तमसस्यारी
इत्यादिभारुंडं ॥ अथाथर्ववेदे ॥ छंदोगायबृहगायेत्यादिअथर्वअंगिरसोजन्मनाइत्यादिअंगिरसं । यारुद्रायत्रेषीत्यादि
नीलरुद्रं । दिविपरिवर्त्मनीत्यादिदेव्यपराजितं । मधुवाताऋतायेत्यादिमधुसूक्तं । अभयंद्यावापृथिवीइतिरोधसं ।
शन्नइंद्राग्नीइतिशांतिकं ॥ एवंहोमंपरिसमाप्यपीठस्यदेवानांपूर्ववत्पूजा । पूजांतेॐनमोरथआदित्येत्यादिमंत्रैर्नमस्काराः ।
सामध्वनिशरीरस्त्वंवाहनंपरमेष्ठिनं । विषपापहरोनित्यमतः शांतिंप्रयच्छमेइतिगरुत्मनिनमस्कारमंत्रः । पूजांपरिसमाप्य

आचार्यःप्रायश्चित्तहोमंव्याहृति चतुष्टयात्मकंजुहुयात् । ततःपूर्वचरुणास्विष्टकृद्धोमः । ततःपूर्णाहुतीः । यजमानःकृता
चमनोदेशकालौसंकीर्त्यकृतस्यलक्षहोमकर्मणः सांगतासिद्ध्येपूर्णाहुतिहोममहंकरिष्ये इतिसंकल्पंकुर्यात् । आज्यांतरमा
नीययथ।विधिनाआज्यं संस्कृत्यस्रुचिचतुर्गृहीतंकृत्वा फलपुष्पादिनिधायोत्थायमूर्द्धानंदिवइत्यादि ऋक्त्रयेणपूर्णाहुतिं
जुहुयात । मूर्द्धानंदिवइत्यादिऋक्त्रयस्यभरद्वाजस्त्रिष्टुवग्निः । पूर्णाहुतिहोमेविनियोगः मूर्द्धानंदिवइत्यादिऋक्त्रयांते
स्वाहाकारेणजुहुयात् । इदमग्नयेनममेतित्यागः । ततोवसोर्द्धारा। साचेत्थं । वह्नेरुपरिस्तंभद्वयधृतामौदुंबरींरुज्वामकोटरीं
बाहुमात्रांआर्द्रास्रुचं पूर्वाग्रांनिधायतस्यांफलपुष्पादिनिधाय तदुपरिशृगलावधृतेननिर्मलघृतपूरितेन ताम्रमृदादिकुंभेना
धोयवमात्रच्छिद्रेणाज्यन्त्रिमुचताग्निरुपरिवसोर्द्धारांतेपातयेत् । तस्याचघृतधारास्रुकप्रनालिकयाग्नौपतंत्यां अग्नादीनिसूक्ता
निश्रावयेत् । कस्तेजामिर्गौतमोगायत्र्यग्निः । ईडेन्योविश्वामित्रोगायत्र्यग्निः । उतेबृहंतत्तिविरूपोगायत्र्यग्निः । पाहिनो
अग्नइतिभर्गोगायत्र्यग्नि । इनोराजन्नित्तित्रितंस्त्रिष्टुबग्निरुद्रसूर्याः।कयानइत्युशनागायत्र्यग्नि।अग्नआयाहीत्तिभर्गोबृहत्यग्निः।
अच्छानःसुदीतिबृहत्यग्निः।अदाभ्योविश्वामित्रोगायत्र्यग्निः । भद्रोनइतिसोभरिरुष्णिमग्निः । अग्नेवाजस्येतिगौतमोष्णी
गग्निः । विशोविशोवइतिगोपवनःप्रथमाया अनुष्टुप्गायत्र्युत्तरयोग्निः । समिद्धमितिभरद्वाजोजगत्यग्निः । उपत्वाग्नि ।
गायत्र्यग्निः वसोर्द्धारायांविनियोगः। इदंविष्णुरितिविष्णुर्गायत्रीविष्णुः । प्रक्षस्यवृष्णोइतिविष्णुर्जगतीवैश्वानरः । प्रकाव्य
मितिवराहस्त्रिष्टुप्वराहः।सहस्रशीर्षेत्यादि षर्णांपुरुषोनुष्टुपंचानांषष्ठ्यागायत्रीपुरुषः । आवोराजेतिरुद्रस्त्रिष्टुप्रुद्रः ।
तद्वोगायेतिचतुर्णांमृगयुर्गायत्रींद्रः । आन्यदोहानांअग्निर्वैश्वानरस्त्रिष्टुबग्निर्वैश्वानरः। अधिपतइतित्रयाणांदेवाउत्कृतिरुद्रः।
उच्चातेजातइतिप्रथमस्य अजिगः । सद्वितीयस्यअभीकः । तृतीयस्यऋषभः । चतुर्थस्याभीकः । पंचमषष्ठयोर्बभ्रुः ।
सप्तमस्येंद्राणी । अष्टमनवमयोःशिशुः । दशमैक दशयोःप्रजापतिः । द्वादशस्येंद्राणी । त्रयोदशस्यामहीयुः । सर्वेषां
गायत्रीसोमः । आग्नेर्वैश्वानरस्याग्निर्वैश्वानरो बृहत्यग्निः । वसोर्द्धारायांविनियोगः ॥ एवमृष्यादीनस्मृत्वाएतानिश्रावणी
यानि । ततःसूक्तसमाप्त्यंतेस्वाहाकारेणस्रुकृस्थं श्रीफलादिजुहुयादाचार्यः। इदमग्नयेनमपेतित्यागः । ततोभिषेकसचग्रह





कलशोदकेनतोरणद्वारविदिक्स्थकलशैःकर्त्तव्यः। साचेत्थं। कुंडादैशान्यं। अक्षतैःस्वस्तिकंविधाय तदुपर्यासनंनिधायतत्र
यत्रयजमानमुपवेश्यतस्यवामभागेपत्नींचोपवेश्य अन्यान्पुत्रादींश्चोपवेश्य सकुटुंबयजमानंअव्यंगात्रयवाहेमस्रग्दामभूषि
ताश्चत्वारोद्विजावाद्यमंगलगीतकैः । सहकलशस्थैर्पात्रांतरगृहीतैरभिषिंचेयुरीशानाभिमुखाः । अभिषेकमंत्राः । शन्नो
देव्यापोहिष्ठादयः । सुरास्त्वामभिषिंचंत्वित्यादयश्च । एवमभिषेकानंतरंसर्वौषधीभिरनुलिप्यशुद्धोदकेनस्नात्वाशुक्ल
माल्यानुलेपनधरः । सपत्नीकोयजमानःसुप्रसन्नमनाआचार्यादिभ्योदक्षिणांदद्यात् । दक्षिणादानविधिः पूर्वोक्तएवा
त्रज्ञेयः । आचार्यादीन्संपूज्यतस्यहस्तेशिवा आपःसंत्वित्यादिकृत्वाकुशयवजलान्यादायदेशकालौसंकीर्त्यकृतैतल्लक्ष
होमाख्यग्रहयज्ञप्रतिष्ठासिध्यर्थं एतादशकपिलाधेनूः रुद्रदैवताःश्रीसूर्यप्रीतये अमुकगोत्रायेत्याद्युक्त्वा । तुभ्यमहंसंप्रददे
कपिलेसर्वदेवानामित्यादिपठित्वानममेतिवदेत् । एवमन्येभ्योदद्यात् । अत्रअयुतहोमापेक्षयादशगुणाःसर्वादक्षिणादेया
शंखादयः । दशरक्तवृषभाः । दशगुणंसुवर्णं । दशपीतवस्त्राणि । दशश्वेताश्वाः । दशकृष्णागावः । दशछागाः । दशगुणं
लोहं । मुख्याभावेनिष्क्रयद्रव्यदानं । तत्रामुकदक्षिणानिष्क्रयप्रभूतमिदंद्रव्यमिति । अथवाप्सूर्यादिभ्योदक्षिणादशदश
गावः । सुवर्णभूषितादद्यात् । एवंदक्षिणांदत्वाहोमसंकल्पंकुर्यात् । सुसंप्रोक्षितमस्त्वित्यादिकृत्वा हस्तेजलमादाय
अस्मिन्यज्ञेयऋत्विग्भिः कृतोहोमःपृथक्पृथक् । यस्ययस्यचदेवस्ययद्यद्द्रव्यंयथाहुतं । यावद्यावच्चसंख्याकंमंत्रेणयेन
येनवासदेवसपरीवारः । प्रीयतांवरदोस्तुमे ॥ इतिपठित्वाजलमुत्सृजेत् । ततोग्रहपीठेआदित्यादीन्संपूज्यतेभ्योबली
दद्यात । देशकालौसंकीर्त्यकृतस्य लक्षहोमात्मकग्रहयज्ञसांगतासिद्ध्ये आदित्यादिग्रहाणांप्रीतयेपूजापूर्वकंबलिदानमहं
करिष्ये इतिसंकल्प्य । ॐभूर्भुवःस्व आदित्यायनमः चंदनंसमर्पयामि । एवपुष्पधूपदीपान्निवेद्यबलिमुपनीयाब्रणमहा
नितिजमदग्निर्बृहतीसूर्यः । सूर्यप्रीतयेबलिदानेविनियोगः । ॐब्रणमहां०असि । आदित्यायसांगायसपरिवारायईश्वरा
ग्निरूपाधिदैवताप्रत्यधिदेवतासहितायेममाषभक्तबलिंसमर्पयामि । भोसूर्यइमंबलिंगृहाणाममआयुः कर्त्ताक्षेमकर्त्ताशांति
कर्त्तापुष्टिकर्त्ताशुभकर्त्ताभव । एवंसर्वत्रः ततआग्नेयांसोमंसंपूज्यआप्यायस्वेतिगोतमोगायत्रीसोमः । सोमप्रीतयेबलि

दानेविनियोगः । आप्यायस्व० । सोमायोमापाधिदेवता प्रत्यधिदेवतासहितायेत्यादि । भोसोम०इमं०दक्षिणेभौमाय नमः भौमंसंपूज्य अग्निर्मूर्द्धेतिविरुपोगायत्रीभौमः । भौमप्रीतयेबलिदानंविनियोगः । अग्निर्मू०भौमायस्कंदभूम्यधिदेवता प्रत्य० भोभौमइमं०। ततईशान्यां। बुधायनमइतिबुधंसंपूज्य अग्नेविवस्वेतिप्रस्कण्वोबृहतीबुधः । बुधप्रीतयेबलि० अग्नेविवस्वबुधायनारायणविष्णुरूपाधिदेवता प्रत्यधिदेवतासहितायेमं० भोबुध०। ततउत्तरेबृहस्पतयेनम इतिबृहस्पतिं संपूज्य । बृहस्पतइत्यप्रतिरथस्त्रिष्टुप्बृहस्पतिः । बृहस्पतिप्रीतयेबलि० बृहस्पतयेप्रजापतींद्राधिदेवता प्रत्यधिदेवता सहितायेमं० भोबृहस्पतेइमं०ततपूर्वस्यांशुक्रायनमइतिशुक्रंसंपूज्य । शुक्रंतइतिभरद्वाजस्त्रिष्टुप्शुक्रः । शुक्रप्रीतयेबलि दाने०शुक्रंते० शुक्रायेंद्रेंद्राणीरूपाधिदेवताप्रत्यधिदेवतासहितायेमं० भोशुक्रइमं । ततःपश्चिमेशनैश्चरायनमइतिसंपूज्य शन्नोदेवीतिसिंधुद्वीपोगायत्रीशनिः । शनिश्चरप्रीतयेबलि० शन्नोदेवी० शनैश्चरायप्रम प्रजापतिरूपाधिदेवताप्रत्यधि देवतासहिताय० भौशनैश्चरइमं० ततोनैर्ऋत्यां ॥ राहवेनमइतिसंपूज्य । कयानइतिवामदेवोगायत्रीराहुः । राहुप्रीतये बलि०कयानश्चित्र०राहवेकालसर्परूपाधिदेवता प्रत्यधिदेवतासहितेमं० भोराहो०ततोवायव्ये० केतुभ्योनमइतिसंपूज्य। केतुंकृण्वन्नितिमधुच्छंदागायत्रीकेतुः । केतुप्रीतयेबलिदाने० केतुंकृण्वं० केतवेचित्रगुप्तब्रह्मरूपाधिदेवताप्र० भोकेतो०। ततोलोकपालेभ्योबलिदानं । गणपतयेनमइतिगणपतिंसंपूज्य । आतूनइतिकुसीदीकाण्वोगायत्रीविनायकः । विनायक प्रीतयेबलि० आतू०न०गणपतयेऋद्धिसिद्धिसहितायेमंबलिं० भोविनायकइमं० ततोदुर्गायैनमइतिसंपूज्य । इमंस्तोममि तिकुत्सो । जगतीदुर्गा । दुर्गाप्रीतयेबलि० इमंस्तोम०दुर्गायैमं०भोदुर्गे० । वायवेनमइतिसंपूज्य । प्राणाशिशुरितित्रित उष्णिःवायुः वायुप्रीतयेबलि० प्राणाशिशु० वायवेइमंबलि० भोवायो० आकाशायनमः । इतिसंपूज्य । आदित्प्रत्नस्येति वत्सोगायत्र्याकाशः । आकाशप्रीतयेबलिदाने० आदित्प्रत्नस्य०आकाशायेमंबलिः भोआकाशायनमःबलिं० अश्विभ्यां नमःइतिसंपूज्य एषोउषेतिप्रस्कण्वोगायत्र्यश्विनौ । अश्विनौप्रीत्यर्थंबलिदाने० एषोउषा०अश्विभ्यामिमंबलिंसम० । भोभोअश्विनौइमंबलिंगृह्णीतंअस्ययजमानस्यायुः कर्त्तारौशांतिकर्त्तारौपुष्टिकर्त्तारौशुभकर्त्तारौभवतं । ततोगरुडायनम





इतिगरुडंसंपूज्य । सामध्वनिशरीरस्त्वमितिमंत्रेणगरुडायेमंबलिसम० । भोगरुडइमंबलिं० ततःक्षेत्रपालायनमः इतिक्षेत्र पालंसंपूज्य । क्षेत्रपालायसांगायसायुधायसवाहनाय सपरिवारायेमंबलिंसमर्पयामि । भोक्षेत्रपालइमं० इमंबलिंशूद्रेण दुर्ब्राह्मणेनवाचतुष्पथेप्रेषयेत् । ततप्रक्षालितपाणिपादआचम्यग्रहान्विसर्जयेत् । उत्तिष्ठन्नोजसेतिकुरुसुतिः काण्वो गायत्रींद्रः । ग्रहाणांविसर्जनेविनि० उत्तिष्ठन्नोजसेतिपठित्वा । यांतुदेवगणाःसर्वेपूजामादायवृष्णश । ऋद्धिचविपुलां दत्वापुनरागमनायच ॥ इतिपठित्वाक्षतपुष्पप्रक्षेपेण ग्रहान्विसृज्य कुंडेप्राच्यादिदिक्षु पूर्ववत्बलिदानं ततस्तंत्रशेषस्य समाप्तिंकुर्यात् । यथा । व्याहृतित्रयहोमः । समिधंहुत्वादेवसवितरितिपर्युक्षणं । अदितेन्वमंस्थाइत्यादिमंत्रैःप्रसेकः । ततःएववर्हिषःकुशमुष्टिमादायेत्यादिनाकुशमुष्टिहोमः । वसुभ्यःस्वाहेत्याज्याहुतिः । प्रदक्षिणागमनं । चमसंनिनयनं। पुनःपूरणं । ततःसुसंप्रोक्षितमस्त्वित्यादि । कृतस्यलक्षहोमात्मकग्रहयज्ञस्यसांगतासिध्यर्थं पूर्णपात्रंदक्षिणांब्रह्मनतुभ्य महेसंप्रददे । अस्यचकर्मणोमहत्वाद्रोणपरिमितमन्नं पूर्णपात्रत्वेनदेयमितिकेचिदाहुः । ततोब्राह्मणभोजनसंकल्पः । तत्रप्राचीनपद्धतिषुलिखिताब्राह्मणभोजनसंख्या । उत्तमपक्षेनवशतानिमध्यमपक्षेसप्तशत्यधिकंशतद्वयं। अधमपक्षेनवति ९० अधिदेवानांतूत्तमपक्षेत्रिंशत्यधिकसप्तत्यधिकसप्तशतानि ७२७ मध्यमपक्षेचत्वारिंशदधिकंशतद्वय २४० अधमपक्षे चतुस्त्रिंशत् । कृतस्यास्यलक्षहोमात्मकग्रहयज्ञसांगतासिध्यर्थं इयत्संख्यानब्राह्मणान् यथासंपन्नेनान्नेनभोजनेनाहंतर्प यिष्ये । ग्रहपीठंपूजोपस्करयुतमाचार्यायदद्यात् इदंग्रहपीठस्थितंवस्त्रान्नपूजोपहारयुतं आदित्यादिग्रहाणांप्रीतयेआचार्य तुभ्यमहंसंप्रददेनमम । कृतस्येत्याद्युच्चार्यन्यूनातिरिक्तंक रणदोषोपशांत्यर्थंभूयसींदक्षिणांनानागोत्रेभ्योब्राह्मणेभ्यो नानानामभ्योहंसंप्रदास्ये । ततोवामदेवंगीत्वाचतुर्भिश्चेत्यग्निप्रणम्यविसर्जयेत् । गच्छगच्छसुरश्रेष्ठस्वस्थानंपरमेश्वर । यत्र ब्रह्मादयोदेवास्तत्रगच्छहुताशन । इतिमंत्रेणाग्निंविसृज्य ॥ यांतुदेवगणाः सर्वेइतिमंडपस्थान्देवान्विसृज्यध्वजपताका द्युपस्करयुतंमंडपमाचार्यायदद्यात् ॥ इमंमंडपंध्वजपताकाहोमसाधनपात्राद्युपहारयुतआदीत्यादीनांप्रीतयेतुभ्यमहंसंप्रददे नमम । ततःसदस्यां। श्चंदनपुष्पवस्त्रदक्षिणाभिःसंपूज्यकृतांजलिःप्रार्थयेत् । ममकृतस्यलक्षहोमात्मकग्रहयज्ञविधेर्यन्यून

मतिरिक्तंतत्सर्वंब्राह्मणानांप्रसादात्परिपूर्णमस्तु । ततःसंपूर्णमस्त्वितिवदेयुः । ततःस्तेषांमंत्राणाशिषोगृहीत्वातानसानुनयं प्रणम्यविसृज्यब्राह्मणान् संभोज्यदीनानाथेभ्यश्चशक्त्या । अन्नादिदत्वासुहृन्मित्रादियुतोहविष्यंभुक्त्वा आत्मानंकृतार्थम न्वीत ॥ इतिशांतिचिंतामणौलक्षहोमप्रयोगः ॥ ॥ अथकोटिहोमप्रयोगः ॥ ॥ कोटिहोमोप्ययुतहोमप्रकृतिकोलक्ष होमवद्भवति। तत्रविशेषोभिधीयते। अत्रषोडशाष्टादशहस्तोन्वामंडपः। मंडपमध्येषोडशहस्तंभवति। तस्यचतुर्विंशांगुलं। तेनांगुलमानेनमेखलाकंठयोन्यादिकार्यं । कुंडादैशान्यांअष्टचत्वारिंशदंगुलावेदिः। सैववितस्तिचतुष्टयमितावप्रत्रययुता वप्रमानंपूर्वोक्तमेव। लक्षहोमाच्छतगुणंसर्वंदक्षिणाहोमादि ॥ अत्रापिसमित्संख्यावर्जिताहोमसंख्या । ऋत्विजोद्वादश । षोडशवाविंशति । चतुर्विंशति । द्वात्रिंशचतुःषष्टिशतंवाहोमकान्वृणुयात् ॥ अथकर्मक्रमः ॥ तत्रपूर्वंमलापकर्षणस्नानादि प्रागुक्तंविधायाहतंवासोयुतंपरिधायशक्त्याकर्माधिकार सिद्धयेप्रायश्चित्तंविधायसंकल्पंकुर्यात् । सोमसामादिपठित्वा गुरुगणपतिपरमेश्वरान्नत्वासुमुखश्चेत्यादिपठित्वा देशकालौसंकीर्त्य अमुकफलकामोहंश्रीपरमेश्वरप्रीतये गोभिलोक्तग्रह यज्ञप्रकृतिकंकोटिहोमाख्यंकर्माहंकरिष्ये इतिसंकल्पंकुर्यात् । ततोगणपतिपूजा । ततःसंकल्पंविशेषः । प्रारीप्समाण कोटिहोमकर्मणोनिर्विघ्नपरिसमाप्तिकामोविनायकपूजामहमिति । ततोमातृपूजा । तत्रकोटिहोमकर्मांगत्वेनविहितं गौर्यादिचतुर्दशमातॄणामित्यादि । ततआयुःशांतिजपः । ततोवृद्धिश्राद्धं । तत्रकोटिहोमकर्मणोंगतयाविहितंनांदीश्राद्ध मित्यादियथाविधिनावृद्धिश्राद्धंविधाय । कर्मसुतत्वज्ञंआचार्यमाहूय पाद्याद्युपचारैर्वस्त्रदक्षिणादानादिभिः संतोष्यबद्धां जलिःप्रार्थयेत् । त्वन्नोगतिःपितामातात्वंगतिस्त्वंपरायणं । त्वत्प्रसादेनविप्रर्षेसर्वंमेस्यान्मनोगतं । आपद्विमोक्षायचमे कुरुयज्ञमनुत्तमं । कोटिहोमाख्यंमतुलंशांत्यर्थंसार्वकामिकं इतिसंप्रार्थ्य साष्टांगप्रणम्यतस्मैआत्मानंनिवेदयेत् । ततो ऋत्विग्वरण । तत्रसर्वंपूर्ववत्तु । प्रार्थनावाक्ये । कोटिहोमभिधंकर्मकर्तुंयूयंप्रसीदतेत्यूहः । कोटिहोमांख्यकर्मणाहंयक्ष्ये तत्रत्वामहमाचार्यमित्यादि । कोटिहोमाभिधेयज्ञेहोमार्थमित्यूहः । एवंवरणानंतरंपूर्ववत्सर्वान् । संपूज्यस्वस्तिवाचनं। ऋत्विजांप्रार्थना। ततोमंडपसकलीकरणं । मंडपप्रतिष्ठा। कुंडसंस्कारा: । तत्रसंकल्पेदेशकालौसंकीर्त्यक्रियमाणेऽस्मिन्





कोटिहोमाख्येकर्मणिअग्निप्रतिष्ठांतदंगतयेत्यादि । घृतार्चिपनामानमग्निंसंस्थापयामित्यग्निस्थापनं । अग्निध्याने विशेषः । चिंतयेतत्रदेवेशंपंचास्यंमृपपावकं ॥ मुखानितस्यचत्वारिसप्तजिव्हाश्चपार्थिवा । एकजिह्वमथैकंतुतत्स्मृतंसार्व कामिकं । ततप्रकृतिवत्कुशकंडिका । चरोनिर्वापाद्यधिश्रयणांतंपूर्ववत् ॥ ततोवेद्यांग्रहस्थापनंपूर्ववत् । तत्रग्रहमंडलं चतुस्त्रिंशांगुलमेवच । नात्रअष्टचत्वारिंशदंगुलप्रमाणेपीठेमंडलस्यापिप्रमाणाधिक्यं । लक्षहोमेग्रहमंडलादुतरस्यांगरुत्मतः स्थानकथनादत्रापिगरुत्मतः स्थापनकथनाच्च । स्थापनपूजादिकंपूर्ववदेव । तत्रसंकल्पेअस्मिन्कोटिहोमाख्येकर्मणि आदित्यादिग्रहाणांमित्यादि । मंडपपूजायांचग्रहाणांचग्रहपूजावत्संकल्पः । होमादिसर्वंपूर्ववत् ॥ पुण्याहजयघोषेण होमारंभः । होमेदिङ्नियमः । ऋग्वेदिनःपूर्वमुखाः । याजुषाउत्तरामुखाः । सामगाः प्रत्यङ्मुखाअथर्वादक्षिणामुखः कृतस्यकोटिहोमकर्मणाःसांगतासिद्धरूपेंपूर्णाहुतिहोममहंमित्यादि । अभिषेकेपुष्पस्नानविधिनाअभिषेकः । कर्तव्य इतिकेचिदाहुस्तदसत् । तस्यवसिष्ठैरलिखनात् । दक्षिणासहस्रंधेनवः । सहस्रंशंखाः । एवमग्रेपि । ब्राह्मणभोजनसंख्यापि लक्षहोमापेक्षयोत्तममध्यमाधमभेदेनशतगुणावेदितव्या । एवमत्रानुक्तंसर्वंकार्यं ॥ ॥ इतिकोटिहोमविशेषः ॥ अथ विनायकशांतिकर्त्तुकामश्चंद्राद्यानुकूल्यवति दिनेकृतबाह्याभ्यंतरशौचः प्रातःकृतनित्यक्रियो निर्णयोक्तान्संभारान् संभृत्याचम्यप्राणानायम्य देशकालौ संकीर्त्यविनायकप्रीतिकामः अमुकफलकामोवायाज्ञवल्कयोक्तां विनायकशांति स्वशाखोक्तविधिना अहंकरिष्ये इतिसंकल्पः । पूर्वोक्तानेकनिमित्तानामन्यतरनिमित्तेतु विनायकोपसर्गनिवृत्तिकाम इतिशेषः । ततस्यतदंगतयागणेशगौर्यादिचतुर्दश मातृपूजनंनांदीश्राद्धंचकरिष्ये इतिसंकल्प्यैतानियथोक्तानिकृत्वाब्राह्म णानवृणुयात् । समाचारादर्घहस्तोयजमानः प्राङ्मुखस्तिष्ठन्सोमसामादिपठित्वा । आयुरारोग्यपुत्रादिसुखश्रीप्राप्तये मम । आपद्विघ्नभयारिष्टशत्रुबुद्धिक्षयायच । विनायकस्यतुष्ट्यर्थंसर्वाभीष्टस्यसिद्धये । श्रीगणेशस्यशांतिंवैकर्तुंयूयंप्रसीद तस्वागतंवोद्विजश्रेष्ठामदनुग्रहकारकाः । इदंमर्घ्यमिदंपाद्यंभवद्भिःप्रतिगृह्यतां । इत्युक्त्वाऽर्घमग्रेनिधाय स्वयमुदङ्मुख उपविश्यआचार्यमुपवेश्यवृणुयात् ॥ अक्षतानआदायदक्षिणंजान्वालभ्य अमुकगोत्रअमुकप्रवरंसामवेदस्यकौथुमीशांखा

ध्यायिनं अमुकशर्माणंविनायकशांत्याअहंयक्षेतत्रत्वामहमाचार्यंवृणे । वृतोस्मिइतिप्रतिवचनांतरं आचार्यस्तुयथास्वर्गेइति पठेत् । ततःपाद्यादि । ततःस्वयंप्राङ्मुखउपविश्योदङ्मुखंब्राह्मणमुपवेश्य गोत्राद्याभाष्यत्वामहंब्रह्माणंवृणे । यथा चतुर्मुखेत्यादिपठेत् । तदनंतरंतथैवोपविष्टउङ्मुखानन्वृणुयात् । गोत्राद्याभाष्यत्वामहस्वस्तिवाचकंवृणे । भगवंसर्व धर्मज्ञसर्वधर्मभृतांवरांवितत्तेमम यज्ञेस्मिनृत्विकृत्वंभवसुव्रतइतिऋत्विजंवृणुयात् । एवमन्यानि । अपित्रीन्समुदायेन चत्वारः । ततोवरणश्राद्धविधिनातानसंपूज्य पुण्याहशब्दान्वाचयित्वा कौतुकबंधंकृत्वा ॥ अस्ययागस्यनिष्पत्यैभवंतो भ्यर्थितामया । सुप्रसादंप्रकर्त्तव्यंशांतिकंविधिपूर्वकं । इतिद्विजान्संप्रार्थ्यप्रणमेत् । अथाचार्यःस्वाचांतःकृतप्राणायामः स्थंडिलेयथाविधिना पंचभूसंस्कारान्कृत्वाग्निं वरदनामानंसंस्थाप्यसमिद्धोमभूजपपरिसमूहनानिकृत्वा ब्राह्मणमुपवेश्य चरुधर्मेणासादनंकृत्वासंप्रोक्ष्याग्नौ चरुस्थालीमधिश्रित्यपश्चादग्नेःप्रागग्रान्दर्भानास्तीर्यतेषुउलूखलाद्यासाद्यकः सेनचरो र्निर्वापःमितायत्वाजुष्टंनिर्वपामि । एवंसमिताय० शालायःकटंकटाय० कूष्मांडायत्वा० राजपुत्रायत्वा० द्विस्तूष्णीमि त्यादिस्याल्यांतंदुलावापांतं । ततस्त्रिःप्रदक्षिणंमेक्षणेनावघट्टनंचरोः कृत्वाहोमस्थंडिलादैशान्यां वस्त्राच्छादितपीठादौ दक्षिणोत्तरदिक्स्थमष्टदलद्वयंकृत्वा दक्षिणादिक्स्थपद्मकर्णिकायां विनायकप्रतिमामुत्तरदिक्स्थपद्मकर्णिकायांमंबिका प्रतिमांचाग्न्युत्तारणपूर्वकंसंस्थाप्य विनायकोपसर्गनिवृत्यर्थमित्याद्युल्लेखेनसंकल्पंकृत्वा पूजांकुर्यात् ॐभूर्भुवःस्वः भगवंतं चतुर्भुजंगजाननंत्रिनेत्रंनागयज्ञोपवितिनं शशांककृतशेखरंदंताक्षमालापरशुमोदकोपेतं बिनायकमावाहयामि । तदुत्तर स्यामंबिकांमावाहयेत् ॥ ॐभूर्भुवःस्व भगवतीमक्षसूत्रदर्पणकमंडलुधारिणी नानाभरणभूषितांत्रिदशंपूजितामंबिका मावाहयामि । ततःप्रतिष्ठा । प्रतिष्ठामंत्रौपठित्वाविनायकांबिकेसुप्रतिष्ठितौभवेतां । आंतूनइतिगणपतिमंत्रःगण पतिगायत्रीवाआप्रांगादितिअंबिकापूजामंत्रः । षोडशोपचारैःपूजा । ततस्तदग्रेकलशंसंस्थाप्य तत्रवरुणमावाह्यपूजयेत् । ततोहोमस्थंडिलाद्वायव्ये गोमयेनोपलिप्तायांभूमौपंचवर्णैः स्वस्तिकंभद्रासनार्थमालिखेत् । तत्पूर्वादिदिक्षुस्वस्तिक चतुष्टयंकलशस्थापनार्थंरचयेत् । अथमध्यस्थितस्वस्तिकोपर्यानडुहंरक्तंचर्मप्राग्ग्रीवमुत्तरलोमास्तीर्यसितेनवाससासंछाद्य





तदुपरिश्रीपर्णीनीर्मितंपीठंनिदध्यात् । अथचतुर्षुस्वस्तिकेषुपूर्वादितः क्रमेणाव्रणानकालतिलकान स्फुटितानेकवर्णान् कलशानस्थापयेत् । स्थापनमंत्राःप्रागुक्ताः । इदंकलशस्थापनमृत्विकर्तृकमितिवहव६ । ततश्कलशचतुष्टयेपियदा कदेतिवरुणमावाह्यपूजयेत् । ततःकलशेषुसर्वेसमुद्राइतिगंगाद्यावाहनं । ततःकुंभानामभिमंत्रणं । कलस्यमुखेविष्णुरित्या दिश्लोकैः । ततःकुंभप्रार्थनां । देवदानवसंवादइत्यादिभिः । ततोऋत्विग्भिःशांतिसूक्तैः कुंभानाभिमंत्रणंकार्यं । ततः शृताभिधाराद्याज्यभागांतंप्राकृतं । ततोभद्रासनस्थदेवानांपूजां । कृत्वाभद्रासनउपविश्यगोघृतलोलीकृतेनगौरसर्षप कल्केनांगमुद्वर्त्यसर्वौषधिचूर्णैः कस्तूरिकागरुचंदनादिभिः शिरसिविलिप्यसमाचारात्स्वस्तिवाचकेभ्यः पूजापूर्वकं दक्षिणांदत्वा आचार्यऋत्विगादिसहितोंबिकाग्रेस्थापितं कलशमादाययजमानस्यहस्तेदत्वा अक्रनिंकुतजानुमित्यादि स्वस्तिवाचनंकुर्यात । अनंतरंरूपगुणशालिनीभिः । सुवासिनीभिर्नीराजनंकारयेदआचार्यः । ततोभद्रासनात्पूर्वदेशा वस्थितंकलशमादायसहस्राक्षमितिमंत्रेणाभिषेकः । भगंतेतिदक्षिणदिक्स्थकलशेन । यत्तेकेशेष्वित्यनेनपश्चिमकलशेन। सहस्राक्षमित्यादित्रिभिर्मंत्रैःउत्तरकलशेनाभिषेकः । एतद्वैपायनमित्यादिमंत्रैश्चाभिषेकः । ततःसर्षपतैलंस्थाल्यामाज्य वभिरुप्यपवित्राभ्यामुत्पूयपवित्रं अग्नौप्रक्षिप्यतैलमग्रावधिश्रित्य आचार्योयजमानस्यपश्चिमत स्तिष्ठनसव्यपाणिगृहीत कुशांतर्हितेयजमानस्यशिरसि । औदुंबरेणस्रुवेणसार्षपतैलंजुहुयात् । मितायेत्यादिषण्मंत्रैः । ततोयजमानस्ततउत्थाय स्नायात् । ततश्चरोर्मितायेत्यादिषण्मंत्रैःषडाहुतयः । ततःस्विष्टकृद्धोमादिकर्मशेषंसमाप्यभद्रासनस्यपरितोदिक्पतिभ्यो बलिन्दद्यात् । कृतस्यविनायकशांतिकर्मणः सांगतासिध्यर्थेइंद्रादिदिक्पतिभ्योबलिदानमहंकरिष्ये । इतिसंकल्पबलिदानं कुर्यात । ततःसुस्नातःशुक्लांबरधरःशुक्लमाल्यानुलेपनोयजमानआचार्यसहितो विनायकांबिकयोरग्रतः सकृदबहुततंडुल पिष्टंतिलमिश्रौदनंमत्स्यमांसंपक्वमपक्वंचगौडीपैष्टीमाध्वीत्रिविधां सुरांचाएतन्मांसादि क्षत्रियादित्रिषयं । ब्राह्मणस्यतु मांसस्थानेसलवणंपायसंसुरास्थानेसलवणंदुग्धंचित्रंपुष्पंसुगंधिद्रव्यंमूलकंपूरिकाः अपूपाःउंडेरकस्रजः । दध्यन्नंपायसं गुडमिश्रामोदकाः श्वपात्रेसंस्थाप्य तत्पुरुषायविद्महेइतिमंत्रेणविनायकाय सुभगायैविद्महइतिमंत्रेणांबिकायैनिवेदयेत ।

ततःशिरसाभूमिंगत्वापुष्पयुतमर्घंतत्पुरुषायेतिमंत्रेण विनायकायसुभगायैइत्यंबिकायैचदद्यात् । ततोदूर्वासर्षपपुष्पाणां पूर्वोक्तमंजलिंपूरयित्वा विनायकमंबिकांचोपतिष्ठेत् । मंत्रस्तु । रूपंदेहियशोदेहिभगंभमवतिदेहिमे । पुत्रांदेहिधनंदेहि सर्वान्कामांश्चदेहिमे । अस्मिन्मंत्रेभगवन्देहिमे भगवन्नित्युह्यविनायकमुपतिष्ठेत् । अथाचार्योनूतन्शूर्पेकुशानास्तीर्य तत्रसर्वमुपहारशेषंसंस्थाप्य चतुष्पथेगत्वातत्रगोमयेनोपलिप्य कुशानास्तीर्यशूर्पंप्राङ्मुखं संस्थाप्यैतैर्मंत्रैर्बलिंदद्यात् । तेचमंत्राः । बलिंगृह्णंत्विमेदेवाइत्यादयः । अनंतरंप्राङ्मुखोपविष्ट उदङ्मुखोपविष्ट उदङ्मुखानाचार्यादीन्पूजयित्वा दक्षिणांदद्यात् । अस्यविनायकशांतिकर्मणः सांगतासिध्यर्थंआचार्यायेदंवस्त्रयुग्मेमिमाचदक्षिणांतुभ्यमहं० एवमन्येभ्यश्च ततउत्तिष्ठन्नितिविनायकमंबिकांचोस्थाप्ययांतुदेवगणा इतिविसर्जयेत् । प्रतिमादिसामग्रीमाचार्यायदद्यात् । अत्रउद्देश मात्रेणोक्तमग्रेस्फुटीभविष्यति ॥ इतिविनायकशांतिः ॥ ॥ अथसग्रहविनायकशांतिपद्धतिः ॥ तत्रतावत्तदुपयुक्ताः संभाराउच्यंते । कुंकुमं । श्रीफलानित्रयोदश षट्कलशाः । तत्रैकस्ताम्रमयः । अश्वगजवल्मीकसंगमह्रदयह्रदेतिपंचस्थाने स्थाःपंचमृतिकारोचनांचंदनंगुगुलुश्चप्रक्षेपार्थं । मुरामांसीष्वचाकुष्ठशैलेयहरिद्राद्वयशटी । चंपकमुस्ताइतिसर्वौषध्यः । सग्रोत्रांगुष्टमारक्तमानडुहचर्म । श्रे पर्णीनिर्मितःपीठः । कलशवेष्टनार्थंकलशसमसंख्ययावस्त्राणि । पीठछादनार्थंशुभ्रं वस्त्रंगणेशांबिकयोरर्थेरक्तवस्त्रमेकंदेवा । आचार्यदक्षिणार्थंमहार्हंवस्त्रद्वयं । स्वस्तिकार्थंपंचवर्णधान्यं । सार्षपंतैलं । उदुंबरस्त्रुवः । चरुस्थालीद्वयं । हरिद्राचूर्णं । गणेशप्रतिमागौर्योश्चाप्लक्षोदुंबराश्वत्थन्यग्रोधाम्रजाः पंचपल्लवाः रक्तचंदनं चंदनरोचनागुरुगजदंतद्वितीयमदलस्तूरीकर्पूरमितिगणपतेरष्टगंधः । चंदनागरुकर्पूरकुंकुमरोचनाजम्टामांसीरक्तचंदन मितिगौर्याः । पूर्वोक्तसर्वौषधिगणःप्रियंगुनागकेसरांगरु कर्पूररोचनाचंदनकुंकुमादि गंधोयजमानस्यशिरसिविलेयनार्थं । शूर्पत्रयं । गौरसर्षकल्कोगवाज्यमिश्रितः । दूर्वा । पुष्पाणि । तांबूलानि । ग्रहस्थापनार्थंवस्त्रंरक्तचंदनश्वेतचंदनकुंकुम मिश्रचंदनमितिक्रमेणचंदनानि । करवीरकुमुदजपाचंपकशतपत्रजातीमल्लिकाकुटज विविधजातीमान्येवक्रमेणपुष्पाणि । द्राक्षादीनिफलानि । कुंदुरुघृतमिश्रयवसर्जरसागरुसिह्लकबिल्वागरुगुग्गुललाक्षा इतिक्रमेणागरुमिश्रितः क्रमेणधूपः ।





गुडोदनमिश्रितपायसान्नहविष्यान्नक्षीरौदनदध्योदन घृतोदनतिलमुग्दमिश्रमाषोदनचित्रोदनमितिक्रमेणनैवेद्यानि । पंच रत्नानि । अर्कादीनांसमिधः । ग्रहाणांप्रतिमाः घृतं । मधु । दधि । तिलाः । शर्करा । रक्तसूत्रं । सकृदवहतास्तंदुलाःतिलचूर्ण मिश्र ओदन । रक्तपीतादिविचित्रपुष्पाणि । सुगंधिद्रव्यं । एलाकर्पूरादि । मूलकाः । पूरिका । अपूपाः । उंडेरकस्त्रक्पिष्टि विकारानानाविधास्तेप्रोक्ताः स्रजः । दधिमिश्रओदनः । पायसं । गुडमिश्रंशाल्यादिपिष्टं । मोदकाः । मांसादिकंब्राह्मण स्यनिषिद्धं । तस्मान्मांसस्थानेसलवणंपायसं । सलवणंदुग्धंसुरास्थानेविविधमन्यदपिभक्ष्यं । एवंसंभारांसंपाद्यदेशस्थ वृद्धाचारात्पीठनिर्माणंकुर्यात् । तत्रयथाशास्त्रंप्राचींनिश्चित्यभूभागंनिम्नोन्नतंपूरणंखननाभ्यां सुसमंविधायचतुरस्रमादौ रचयेत् । तद्यथा ॥ चतुराशीत्यंगुलमितांरज्जुमुभयतः पाशांकृत्वातन्मध्यमं कथयित्वातदेवप्राचीनंप्रसार्य तन्मध्यांकेशकुं दत्वा ततःपाशद्वयंमध्यशंकौदत्वा पूर्वसंपादितदक्षिणोत्तरमत्स्यद्वयंमध्येदक्षिणत आयम्यचिह्नंकृत्वा एवमुत्तरतःकृत्वेष्ट सूत्रंसममध्यमुदीचीनंदत्वातदंतयोःशंकूदद्यात् । ततःपूर्वदक्षिणशंकोःपाशौदत्वा मध्यमंबहिराकृष्यकोणे शंकूदद्यात् । एवंचत्वारः कोणान्साधयेत् । अथवायत्प्रमाणारज्जुः स्यादित्यनेनप्रकारेणचतुरस्रंसंसाध्य चतुराशीत्यंगुलमितावेदि निर्मायतस्यांपीठानिकुर्यात् । ईशानकोणेचतुस्त्रिंशदंगुलंयत्राधिकंद्वादशांगुलोच्छ्रितंग्रहपीठं । ततोवायौएतावत्प्रमाणं भद्रासनं । एतयोरंतरालभूः षोडशांगुलमिता । ततोग्रहपीठातीर्यक्सूत्रेणत्रिंशांगुलं त्यक्त्वानिरृतिकोणेपश्चिमस्यां अंगुलपंचकंमुक्त्वादक्षिणेप्यंगुलपंचकंमुक्त्वा चतुर्विंशांगुलंहोमार्थंस्थंडिलंचतुरंगुलोच्छ्रितं । भद्रपीठहोमस्थंडिलयोरंतराल एकविंशांगुलंमितः । ततःआग्नेयकोणेदक्षिणतः सार्द्धषडंगुलंत्यक्त्वा पूर्वस्यांतात्रदेवविहायएकविंशांगुलंचतुर्विंशांगुलं वाद्वादशांगुलोच्छ्रायंविनायकांबिकयोःपीठं । चतुर्विंशांगुलपक्षेहोमपीठांबिका पीठयोरंतराल । षड्त्रिंशत्यंगुलमितः । एक विंशतिपक्षेसार्द्धसप्तविंशत्यंगुलानिग्रहाबिकापीठयोरंतर एकविंशांगुलचतुर्त्रिंशतिपक्षे । एकविंशांगुलपक्षेसार्द्धद्वादशांगुलः । एवंपीठकरणप्रकारः ॥ ॥ अथपदार्थक्रमः ॥ तत्रार्थक्रमः । तत्रपूर्वेद्यमश्रुकर्ममलापकर्षण स्नानाहतवस्त्रधारणाचमनादिकृत्वा कर्मांगाचमनंकृत्वाप्राणानायम्यकर्मणः प्रधानसंकल्पंकुर्यात् । ताम्रपात्रेशुद्धोदकमापूर्यतत्रचंदनपुष्पाक्षतादिनिक्षिप्यसुमुख

श्वकदंतश्चेत्यादिपठित्वा गुरुंगणपतिंचनत्वादेशकालौसंकीर्त्य विनायकांबिकयोःप्रीत्यर्थं आदित्यादीग्रहाणांचप्रीतये याज्ञवल्क्योक्तविनायक शांत्यागोभिलोक्तग्रहयज्ञेनाहं यक्ष्येइतिसंकल्पंविधाय यथाविधिनामातृपूजाभ्युदयिकेंकुर्यात् । तत्रैवप्रयोगः । देशकालौसंकीर्त्यसग्रहविनायक शांतिकर्मणोंगतयाविहितं गौर्यादिचतुर्दशमातॄणांगणेशवसोर्द्धारासहितानांस्थापनप्रतिष्ठापूजनमहंकरिष्यइतिसंकल्प्य पूजांविधाय । आयुःशांतिपठित्वावैश्वदेवंकृत्वा आभ्युदयिकंकुर्यात् । देशकालौसंकीर्त्यतिथौ अमुकगोत्राणांअस्मत्पितृपितामहप्रपितामहानां अमुकामुकशर्मणां गोत्राणांमातामहप्रमातामहवृद्धप्रमातामहानांअमुकामुकशर्मणां एषांअद्यसंग्रहविनायकशांतिकर्मणः प्रारंभांगनांदिश्राद्धंपार्वणद्वयं विश्वेदेवापूर्वकंमर्घपिंडसहितंयुष्मदनुज्ञया अहंकरिष्येइतिसंकल्प्ययथाविधिनाश्राद्धंविधायवाह्यमंडपेसमागत्यसमाचारादर्घकुर्यात्। मृत्पात्रे दधिकुसुमाक्षतजलानिद्रव्यंपूंगीफलंचकृत्वा पिधायरक्तसूत्रेणवेष्टितमादाय ऊर्ध्वस्थित्वापत्नीदक्षिणतस्तिष्ठेत् । ततसोमसामादिपठित्वा अद्यश्रीहकस्यचित्सच्चिदानंदरूपस्यब्रह्मणोनिर्वाच्यमायाशक्तिविजृंभिता विधायोगात्कालकर्मस्वभावाविर्भूतमहतत्वोदिताहंकार तृतीयोद्भूतवियदादि पंचकेंद्रियदेवतानिर्मितांडकटाक्षे चतुर्दशलोकात्मकेलीलयातमध्यवर्जिभमवंतःश्रीनारायणस्यनाभिकमलोद्भूतसकललोकपितामहस्यब्रह्मणः सृष्टिंकुर्वतस्तदुद्धरणायचप्रजापतिप्रार्थिततस्यमहापुरुषस्यसितवराहावतारेणध्रियमाणायामस्यांधरित्र्यां भूर्लोकसंज्ञितायां सप्तद्वीपमंडितायांक्षीरोदाद्यब्धिद्विगुणद्वीपवलयीकृतलक्षयोजनविस्तीर्णजंबूद्वीपे स्वर्गस्थितामराद्यासा सितावतारेगंगादिसरिद्भिः पावितेमहाभारतेवर्षे निखिलजनपावनेशौनकादिमुनिकृतनिवसतिकेनैमिषारण्ये अमुकनामक्षेत्रेश्रीभगवतोमार्त्तंडस्यकृपापात्र कालत्रितयज्ञगर्गवराहाचार्यादिगणितायांसंख्यायांश्रीब्रह्मणे द्वितीयपरार्द्धेश्रीश्वेतवाराहनाम्नि प्रथमेकल्पेद्वितीयेयामेतृतीये मुहूर्त्तेस्वायंभुवस्वारोचिषोत्तमतामसरैवतचाक्षुषेतिषण्मनूनामति क्रांतानांमतिक्रम्यमाणेसंप्रति वैवस्वतमन्वंतरे युगानांत्रिध्येयातेअष्टाविंशतितमेकलियुगेप्रथमप्रचरणे श्रीमनृपविक्रमार्कसमयातीतसंवत्सराणांव्यतिक्रांतानाममुक संवत्सरेअमुकायनगते श्रीसूर्येअमुकऋतौअमुकमासेअमुकपक्षेअमुकतिथौ अमुकवासरेएवंगुणविशिष्टेपुण्ये कालेदेशेच। क्षेमायुरारोग्यपुत्रादि सुखश्रीप्राप्त्ये





ममआपद्विघ्नभयारिष्टशत्रुबुद्धिक्षयायच । विशेषकाम्यहोमेनसहितं समिद्राद्रिभिः । विनायकस्यतुष्ट्यर्थंसर्वाभीष्टस्यसिद्धये । सग्रहाणांविनायकस्यशांतिकर्त्तुंप्रसीदत । स्वागतंवोद्विजश्रेष्ठामदनुग्रहकारकाः । इदमर्घ्यमिदंपाद्यंभवद्भिःप्रतिगृह्यतां । इत्युक्त्वाब्राह्मणानामग्रेर्थेस्थापयेत् । ततःस्वयमुदङ्मुखउपविश्यप्राङ्मुखमाचार्यमुपवेश्य अक्षतानादाय आचार्यस्यदक्षिणंजान्वालभ्य अमुकगोत्रंअमुकप्रवरंसामवेदस्य कौथुमीशाखाध्यायिनं अमुकशर्माणंस्वीकृत्वाभ्यांविनायकशांतिग्रहयज्ञाभ्यांमहंयक्ष्येतत्रत्वामहमाचार्यंवृणे आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः । तथात्वंममयज्ञेस्मिन्नाचार्योभवसुव्रत । आचार्यएतत्तेपाद्यं । एषअर्घः । इदंपादप्रक्षालनं । इदमत्रचंदनंपुष्पं । एवमाचार्यंवृत्वा उदङ्मुखंब्राह्मणमुपवेश्य सयवहस्तोदक्षिणजान्वालभ्य गोत्राद्याभाष्यस्वीकृताभ्यामित्यादिभिः अस्यवरणांगार्चनसमृध्यर्थंदास्यमानांदक्षिणांवृतेभ्यो० अद्यपूर्वो०तिथौ । वरणांगार्चनकृतस्यविधेः सर्वंपरिपूर्णमस्तु ॥ ततःसंक्षेपेणस्वस्तिवाचनं ॥ ततःफलहस्तोयजमानःप्रार्थयेत् । अनयोर्यागयोर्निष्पत्त्यैभवंतोभ्यर्थितामया । सुप्रसादंप्रकर्त्तव्यंशांतीद्वेविधिपूर्वकं ॥ इत्युक्त्वाफलमग्रेनिधायप्रणमेत्। अथआचार्यः स्वाचांतःप्राणायामः । स्थंडिलेयथाविधिनापंचभूसंस्कारान्विधायवरदनामानमग्निंप्रतिष्ठापयामित्यग्निंसंस्थाप्य समिद्धोमंकृत्वा । इदभूमेरितिभूजपमिमंस्तोमेत्यादिमंत्रैः परिसमूहनंकृत्वा यथाविधिनाब्रह्माण मुपवेश्यागत्यप्रकृतिवदुदक पात्रादिपात्राण्यासाद्यअन्यदपिहोमसंभारं आसाद्यअभिमंत्रितोदकेनासादनक्रमेणसंप्रोक्ष्य आसादितोपहाराणांपवित्रास्तु। ततस्थालीद्वयमग्नावधिश्रित्यखंडस्तरणादिकृत्वाकंसपात्रेणनिर्वपेत्। मितायत्वाजुष्टंनिर्वपामि । संमितायत्वा० शालायत्वा० कटंकटायत्वा० कूष्मांडायत्वा०। राजपुत्रायत्वा०। द्विःस्तूष्णीमित्यादिस्थाल्यांतंदुलप्रक्षेपांतंप्रकृतियत्। ततआदित्यायत्वाजुष्टंनिर्वपामीत्यादिग्रहाणां यथावच्चरोनिर्वापादि। चरुद्वयेपि पृथग्मेक्षणेनावघटनं । ततोविनायकांबिकयोर्ग्रहाणांचस्थापनं । केचित्स्थापनानंतरंचरोरधिश्रयणादिकर्त्तव्यामित्याहुः। ततगोभिलोक्तक्रमविरोधापेक्षंन्यायविरोधाच्च । विनायकपीठेरक्तंवस्त्रंप्राग्दशमुदग्दशंवास्तीर्यतदुपर्यक्षतैश्चतुरस्रंकृत्वा तन्मध्येदक्षिणोत्तरयोरष्टदलद्वयंकृत्वा दक्षिणदिक्स्थेऽष्टदले गणपतिंस्थापयेत् । तत्रादौप्रतिमाद्वयस्यअग्न्युत्तारणंकृत्वा

स्थापनंकार्यंतच्चेत्थं । अश्वादिस्थानस्थाभिः पंचमृद्भिःस्योनापृथिवीतिमंत्रेणविनायक प्रतिमापूर्वकंप्रतिमाद्वयस्यक्षालनं । ततपंचगव्येन । तत्रगायत्र्यागोमूत्रेण । गावश्चिदितिगोमयेन । ततोदुग्धदधिघृतैःस्वस्वमंत्रेण । ततःस्वस्वमंत्रैःपचामृतेन । ततःप्रतिमाताम्रादिपात्रेनिधाय । अग्नआयाहिवीतयइत्यादशतिसमाप्तियावदग्निपदं विहायाविछिन्नांजलधारांपातयंस्त्रिवारंपठित्वा चतुर्थ्यामावृत्तौयथास्थितमग्निपदयुक्तांदशतिंपठेत् । एवमग्न्युत्तारणंकृत्वा दक्षिणादिक्स्थेष्टदले गणपतिंस्थापयामि इतिगणपतिंसंस्थाप्य उदक्स्थेऽष्टदलेअंबिकांस्थापयामि इतिअंबिकांस्थापयेत् । ततःपीठस्याग्रे स्वस्तिवाचनकलशंयथाविधिनास्थापयेत् । ततोभद्रपीठेपंचवर्णैस्वस्तिकंविधाय पूर्वादिचतुर्दिक्षुस्वस्तिकं चतुष्टयंकलशस्थापनार्थंरचयेत् । भद्रपीठस्थस्वस्तिकोपरिआनडुहंरक्तचर्म प्राग्रीवमुत्तरलोमास्तीर्यसितेनवाससा संछाद्यतदुपरिश्रीपर्णी१निर्मितंपीठंनिदध्यात् । अथचतुर्षुस्वस्तिकेषुपूर्वादितः। क्रमेणाअत्रणानकालतिलकानस्फुटितानेकवर्णान्कलशान स्वस्वमंत्रैःस्थापयेत्। तेषुसर्वौषधिपंचमृतिकागोरोचना गंधान्गुग्गुलुंचक्षिपेत्। सिद्धार्थयवदूर्वाश्च। तत्रमंत्राः। भूमिर्भूमिरितिभूम्यभिमंत्रणं । आविशन्नितिकलशस्थापनं । समन्यायंनीतिजलेनपूरणं । त्वमिमाओषधीरितिओषधीः। स्योनापृथिवीतिपंचमृतिकाः । अर्चतप्रार्चतेतिगंधं। गुग्गुलंच। अयमूर्जेतिपल्लवान्। चंद्रमाअप्स्वंतरेतिहिरण्यंपरिवाजपतिरितिपंचरत्नानि। इदंवसोइतिवस्त्रवेष्टनं। सघातंवृषणहतिपूर्णपात्रं। पुनरयमूर्जेतिफलं। इदंकलशस्थापनंऋत्विक्कर्तृकमितिकेचित् आचार्यकर्तृकमितिबहवः । एवंकलशान्संस्थाप्य ग्रहपीठेग्रहाणांपूर्वोक्तविधिनाकुर्यात् । ग्रहपीठस्येशानकोणेकलशस्थापनं। पीठद्वयोपरिवितानवंधनं। ततःपूजा ॥ यजमानोविनायकपीठात्पश्चिमतः प्राङ्मुखउपविश्यआचम्यप्राणानायम्यगायत्र्याभिमंत्रितोदकेनपूजोपहारंसंप्रोक्ष्यप्रार्थयेत्। भवतांप्रसादात्विनायकांबिकयोःपूजोपहाराणां। पवित्रतास्तु। देश०अत्राद्य०तिथौ । ममसकुटुंबस्यसर्वाभीष्टसिध्यर्थं भूतभविष्यवर्त्तमानविनायकोपसर्गनिवृत्तयेद्रिव्यभौमांतरिक्षत्रिविधोत्पातशांतयेविनायकांबिकयोः प्रीतयेपूजामहंकरिष्यइतिसंकल्प पूष्पांजलिहस्तोयजमानआवाहयेत् । तत्पुरुषायविद्महेवक्रतुंडायधीमहितन्नोदंतीप्रचोदयात् । इतिगायत्रींपठित्वा भगवंतंविनायकंगजाननंत्रिनेत्रंनागयज्ञोपवीतिनं





चंद्रमौलिंदंताक्षमालापरशुमोदकोपेतंमावाहयामि । एवंविनायकमावाह्यगौरीमावाहयेत् । सुभगायैविद्महेकामसालिन्यैधीमहितन्नोगौरीप्रचोदयात् । भगवतींविश्वजननींसुवर्णाभकांतिंनानाभरणभूषितांचंद्रमौलीं अक्षसूत्रकमलदर्पणकमंडलुधारिणींत्रिदशपूजितां गौरीमावाहयामि एवमावाह्यप्रतिष्ठामंत्रौपठित्वा अस्मिन्पीठेस्थापितप्रतिमाद्वये विनायकांबिके सुप्रतिष्ठितौभवेतांइत्युक्त्वा अक्षतान्प्रक्षिप्यगणपति गायत्र्यापाद्याद्युपचारैर्गणपतिंअभ्यर्च्यगौरींतद्गायत्र्यापूजयेत्। पूजाविधिर्वक्ष्यमाणस्तथापूजा । ततोभद्रासनाचतुर्दिक्षुस्थापित कलशेषुयदाकदाइतिमंत्रेण वरुणमावाह्यप्रतिष्ठामंत्रौपठित्वा प्रागादिस्थापितकलशेषुवरुणः सुप्रतिष्ठितोवरदोभवतु । एवंप्रतिष्ठांकृत्वावरुणंसर्वोपचारैःसंपूज्यकलशेषुतीर्थावाहनं । सर्वेसमुद्राःसरितः सरांसिचनदानिच । आयांतुयजमानस्यदुरितक्षयकारकाः ततःकुंभानामभिमंत्रणं । कलस्यमुखेविष्णुः कंठेरुद्रःसमाश्रितः । मूलेतस्यस्थितोब्रह्मामध्येमातृगणाःस्मृताः । कुक्षौतुसागराः सप्तसप्तद्वीपावसुंधरा । ऋग्वेदोथयजुर्वेदःसामवेदोह्यथर्वणः । अंगैश्च०हिताःसर्वेकलशंतुसमाश्रिताः ॥ ततःकुंभप्रार्थना ॥ देवदानवसंवादेमथ्यमानेमहोदधौ । उत्पन्नोसियदाकुंभविधृतोविष्णुनास्वयं । त्वत्तोयेसर्वतीर्थानिदेवाः सर्वेत्वयिस्थिताः । त्वयितिष्ठंतिभूतानित्वयिप्राणाप्रतिष्ठताः शिवःस्वयंत्वमेवासित्वंविष्णुत्वंप्रजापतिः। आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः। त्वयितिष्ठंतिसर्वेपियतःकामफलप्रदः । त्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव । सानिध्यंकुरुमेदेवप्रसन्नोभवसर्वदा ॥ ॥ततऋत्विग्भिर्वारुणानिसामानिशांतिसूक्तंराक्षोघ्नान्यप्रतिरथंपावमान्यो बृहद्रथंतरेणतानिकुंभान्स्पृष्ट्वापठितव्यानि । तानियथा ॥ आनोमित्रे। प्रमित्रायत्राहाउः साम।३। यदाकदासाम।३। घृतवतीद्वे । अबोधियाइत्यावाद्यरिष्टबर्गः ॥ राक्षोघ्नानि । आशुःशिशाइत्यादिउपास्मैगायताइत्यादिसाम३। बृहद्रथंतरे । एतानि । ततोग्रहाणांपूजातत्रसर्वमावाहनादिपूजांतंपूर्ववत्। ग्रहान्संपूज्यतत्रस्थकलशेवरुणमावाह्य । सर्वोपचारैरभ्यर्च्य । गंगाद्यावाहनकलशाभिमंत्रणकलशप्रार्थनादिपूर्ववतकार्यंततोग्रहाणांपूजनपरिपूर्णताप्रार्थयेत्। ततश्चरुद्वयेपिश्रृताभिधाराद्याज्यभागांतंप्रकृतिवत्। आज्यभागहोमांतेःभद्रासनस्थदेवानांपूजा। यजमानोभद्रासनात्पश्चिमतः प्राङ्मुखउपविश्यआचम्यप्राणानायम्य देशकालौसंकीर्त्यममसकुटुंबस्य अशेषदुरित

क्षयपूर्वकविनायकोपसर्गनिवृत्त्यर्थं भद्रासनस्थदेवानांपूजामहंकरिष्येइतिसंकल्प पूजांकुर्यात । मध्येजनार्दनायनमः । प्राच्यांमरुद्भ्योनमः । आग्नेय्यांधरादेव्यै० । दक्षिणेतपनाय० । नैर्ऋत्यांधात्रे० प्रतीच्यां अश्विभ्यां० वायौसाध्येभ्यो० उदीच्यांधनदायनम० ऐशान्यांलोकपालेभ्यो० ऊर्ध्वंश्रीधराय० । अधःअनंताय० द्वितीयावृतौप्रागाद्येव । अप्रमेयाय० आग्नेय्यांयज्ञविक्षेपाय० दक्षिणस्यांविमुखाय० नैर्ऋत्यां वृषक्षयाय० प्रतीच्यांयज्ञभैरवाय० वायौशूर्पकोटराभ्यां० उदीच्यांराजपुत्राय० ऐशान्यांजृंभकाय० मध्येकूष्मांडाय० तृतीयावृत्तौ । स्वस्वदिक्षुदिक्पतीन्पूजयेत् । इंद्राय०अग्नये० यमाय० निर्ऋतये० । वरुणाय०वायवे० कुबेराय०ईशानाय०ब्रह्मणे० । अनंताय० एवंदेवान्संपूज्य ब्राह्मणान्वृद्धांश्च प्रणम्यमंगलघोषपुरःसरंदक्षिणपादेनाग्रतरेण श्रीपर्णीपीठोपर्युपविशेत् । ततोगोघृतलोलीकृतेनगौरसर्षपकल्केनउत्तमांगनर्जसर्वांगोद्वर्तनं । ततःसर्वौषधिसर्वगंधैःशिरसि विलेपनंततःसमाचाराच्चतुर्णां स्वस्तिवाचकानांसुवासिनीनांचपूजा । साचेत्थंपूजोपहाराणांपवित्रतास्तु । देश० । अत्राद्य० तिथौ० भद्रासनोपविष्टस्यमम सर्वाभीष्टसिध्यर्थंविनायकांबिकयोः प्रीत्यर्थंस्वस्तिवाचकानांसुवासिनीनांचपूजनमहंकरिष्ये । इतिस्वस्तिकेभ्यः सुवासिनीभ्यश्चइमान्यासनानि । इदमत्र चंदनंपुष्पं । चंदनादिभिःसंपूज्ययथादत्तंगंधाद्यर्चनं स्वस्तिवाचकेभ्यःसुवासिनीभ्यश्च अहंसंप्रददे ततोवस्त्रदानं । इमानि दंपतिपरिधानवस्त्राणिबार्हस्पत्यानि गंधपुष्पाद्यर्चितानिविनायकांबिकयोःप्रीत्यर्थं स्वस्तिवाचकेभ्यःसुवासिनिभ्यश्चअन्येभ्योपिअहंसंप्रददेनमम । विनायकांबिकयोःप्रीत्यर्थं आग्नेयंद्रव्यंनानागोत्रेभ्योब्राह्मणेभ्योनानानामभ्योहंसंप्रददेनमम । ततोवस्त्रादीनांदानं । ततःस्वस्तिवाचकानांपूजनकृतस्यविधेःपरिपूर्णमस्तु । ततस्वस्तिवाचनं । देशकालौस्मृत्वा । मम सकुटुंबस्यविनायकोपसर्गनिवृत्त्यर्थं याज्ञवल्क्यादिमुनिविहितं स्वस्तिवाचनमहंकरिष्ये । ततोविनायकपीठस्याग्रेस्थापितं कलशमादायस्वस्तिवाचकानुदङ्मुखानवस्थाप्य स्वस्तिवाचनंकारयेत् । अवनिकृतजानुमंडलमित्यादि । अनंतरंरूप गुणशालिनीभिः सुवासिनीभिः नीराजनंकारयेदाचार्यस्तिलकपूर्वकं । ततोभद्रासनात्पूर्वदेशावस्थितं कलशमादाय आसनात्पश्चिमतःप्राङ्मुखस्थित्वाकलशस्थोदकेन कलशेनैवाभिषिंचेन्मंत्रेण । तथा । सहस्राक्षंशतधारमृषिभिः पावनं





कृतं । तेनत्वामभिषिंचामिपावमान्यःपुनंतुते । ततोदक्षिणदिक्स्थकलशेन । भगंतेवरुणोराजाभगंसूर्योबृहस्पतिः । भगमिंद्रश्चवायुश्चभगंसप्तर्षयोददुः । ततःपश्चिमदिक्स्थकलशेन । यत्तेकेशेषुदौर्भाग्यंसीमंतेयच्चमूर्द्धनि । ललाटेकर्णयो रक्ष्णोरापस्तद्घ्नंतुतेसदा । ततःसहस्रा । क्षमित्यादित्रिभिर्मंत्रैरुत्तरकलशेनाभिषेकः । बृहस्पराशरेणाप्यभिषेकमंत्रा उक्ताः । एतद्द्वैपायनंस्नानं सहस्राक्षमृषिस्मृतं । तेनत्वाशतधारेणपात्रमान्यःपूनंतुतै । शक्रादिदशदिक्पालाब्रह्मेशाः केशवादयः ॥ आपस्तद्घ्नंतुदौभाग्यंशांतिकुर्वंतु सर्वदा । समुद्रागिरयोनद्योमुनयश्चपतिव्रताऽ ॥ दौभाग्यघ्नंतुतेसर्वेशांतिं यच्छंतुसर्वदा । पादगुल्फोरुजंघाश्चनितंबोदरनाभिषु । स्तनोरुबाहुहस्तांगुलिग्रीवांसांह्रिदिसंधिषु । नासाललाटकर्णभ्रु केशांतेषुचयत्स्थितं ॥ यदापोघ्नंतुदौभाग्यंशांतियच्छंतुसर्वदा । ततःसार्षपंतैलंस्थाल्यामाज्यवन्निरूप्यपवित्राभ्यामुत्पूय पवित्रेअग्नौप्रक्षिप्य तैलपात्रमग्नावधिश्रित्योदगुद्वास्य आचार्योयजमानस्यपश्चिमतस्थिन् सव्यपाणिगृहीतांतर्हितेयजमान शिरसिऔदुंबरेणस्रुवेणसर्षपतैलंजुहुयात् । ॐमितायस्वाहा ॥ इदंमितायनमम ॥ सम्मितायस्वाहा । इदंसम्मितायनमम । ।२। शालायस्वाहा ॥ इदंशालायनमम ।३। कटंकटायस्वाहा । इदंकटंकटायनमम ।४। कूष्मांडायस्वाहा । इदंकूष्डाय नमम । ५। राजपुत्रायस्वाहा । इदंराजपुत्रायनमम ।६। ततोयजमानस्ततउत्थायस्नायात् । ततआचार्योविनायकचरोः प्रकृतिवत् मितायस्वाहा इत्यादिपूर्ववज्जुहुयात् । ततोग्रहाणांप्रकृतिवच्चरुहोमः । आदित्यायस्वाहा । इदमादित्यायन मम । सोमायस्वाहा । इदंसोमाय । भौमाय० । इदंभौमायनमम । बुधाय० इदंबुधायनमम । बृहस्पतये० इदंबृहस्पतये नमम । शुक्रायस्वाहा । इदंशुक्रायनमम । शनैश्चरायस्वाहा । इदंशनिश्चरायनमम । राहवेस्वाहा । इदंराहवेनमम । केतुभ्यःस्वाहा । इदकेतुभ्योनमम । ततोमितायेत्यादिषण्मंत्रैःस्रुवेणाज्यहोमः । ग्रहाणामपिस्वस्वमंत्रैराज्याहुतयः । ततोदधिमध्वाज्याक्ताभिरर्कादि समिद्भिरष्टाविंशतिरष्टसंख्ययावाहोमः । ततःस्वस्वमंत्रैर्नैवेद्यतत्तत्शेषेणाष्टावाष्टाहुतयः प्रतिग्रहं । ततस्तिलैर्होमः । तत्रआदित्यादिग्रहाणांमंत्राःप्रसिद्धाः । अन्येषामुच्यतेः । आबोराजा । मदच्युतद्वे । आमंद्रैः । इदंविष्णुः । त्वमित्सप्रथा । इंद्रमिद्दे । नाकेसुपर्ण । ब्रह्मजज्ञानं । चित्रइच्छिशो ॥ ॥ अथप्रत्यधिदेवतानां ॥

अग्निंदूतं । उदुत्तमं । नमःपृथिव्यै । सहस्रशीर्षा । इंद्रायेंदो । नकिइंद्र । प्रजापतये । याःसंधां । एषब्रह्माय ॥ ॥ अथ
लोकपालानां ॥ ॥ आतूनइंद्राइमंस्तोम । प्राणाशिशु । आदित्पत्नस्य । एषोउषा । श्रीरसि । वास्तोष्पते । त्र्यंबकं ।
अथदिक्पालानां । त्रातारमिंद्रः । अग्निस्तिग्मे । नाकेसुपर्ण । वेत्थाहि । यदाकदा । वातआवातु । तत्राहंसो अभित्वाशूर ।
मयिवर्चो । अतोदेवा । एभिर्मंत्रैरष्टोत्तरशतमष्टाविंशतिरष्टावष्टौवा । आहुतयोग्रहाणां । अन्येषांचततोन्यूनसंख्यया
होमःकार्यः । श्रीरसीतिलक्ष्मीप्रीतयेहोमः । त्र्यंबकमंत्रेणगुग्गुलुः । एवंहोमंपरिसमाप्यविनायकांबिकयोःपूजांकुर्यात् ।
यथा । यजमानःपीठाग्रेप्राङ्मुखउपविश्य आचमनप्राणायामादिकृत्वा देशकालौसंकीर्त्यकृतस्यहोमसांगतासिध्यर्थंविना
यकांबिकयोःप्रीत्यर्थंपूजनमहंकरिष्ये इतिसंकल्प्य । तत्पुरुषायविघ्नहेवक्रतुंडायधीमहि । तन्नोदंतीप्रचोदयात् । इति
गणपतिगायत्र्यास्वदेहेषोडशांगेषुन्यासान्कुर्यात् । ततोदेवस्यांगेषुतथैवसंन्यस्यउपचारान्कुर्यात् । उपचाराःसर्वेंगायत्र्या
कर्त्तव्याः । गायत्रींपठित्वाविनायकायपाद्यंअर्घं । आचमनीयं । स्नानं । पुनराचमनीयं । वस्त्रं । पुनराचमनीयं । उपवीतं ।
गंधं । पुष्पं । धूपं । दीपं । नैवेद्यं । नैवेद्यंतुकृताकृतादिपूर्वोक्तद्रव्याणिसघृतानिसशर्कराणि । शूर्पेकृत्वाग्रेसंस्थाप्य इदं
वैणवशूर्पस्थितंनैवेद्यंकृताकृताद्युक्तद्रव्ययुतं । अविद्यमानोपहारनिष्कृतिदत्तद्रव्ययुतं तत्पुरुषायवक्रतुंडायदंतिनेस्वाहा ।
ततःशिरसाभूमिंगत्वा दूर्वासर्षपपुष्पाक्षतादिअर्घपात्रेकृत्वागायत्रीमुच्चार्य । तत्पुरुषायवक्रतुंडायदंतिनेइदअर्घ्यंस्वाहा ।
इत्यर्घंदत्वाउपतिष्ठेत् रूपंदेहिजयंदेहिभाग्यंभगवन्देहिमे । पुत्रांदेहिधनंदेहिसर्वान्कामांश्चदेहिमे । इत्युपस्थायप्रदक्षिणा
स्तुतिनमस्कारान्विधाय । अंबिकांपूजयेत् । सुभगायैविद्महेकाममालिन्यैधीमहि । तन्नोगौरीप्रचोदयात् । इतिगायत्र्या
न्यासादिकंसर्वपाद्याद्युपचारैःसंपूज्यनैवेद्यंदद्यात् । इदंवैणवमित्याद्युच्चार्य सुभगायैकाममालिन्यैगौर्यैस्वाहा । ततोर्घः ।
गायत्रीमुच्चार्यसुभगायैकाममालिन्यैगौर्यैइदमर्घ्यंस्वाहा इत्यर्घंदत्वाउपतिष्ठेत् । रूपंदेहिजयंदेहिभाग्यंभगवतिदेहिमे ।
पुत्रांदेहिधनंदेहिसर्वान्कामांश्चदेहिमे । इत्युपस्थायप्रदक्षिणास्तुतिनमस्कारान्विधाय विनायकांबिकयोःपूजनकृतस्य
विधेःसर्वंपरिपूर्णमस्तु । ततोग्रहाणांपूजा । पूजोपहारप्रोक्षणांतंविधाय देशकालौसंकीर्त्यकृतस्यहोमसांगतासिध्यर्थं





आदित्यादिग्रहाणांप्रीतयेपूजामहंकरिष्ये । इतिसंकल्प्यआदित्यादीन्पूर्ववत्संपूज्य नैवेद्यंदत्वाअर्घंदद्यात् । आदित्याद्या
ग्रहाःसर्वेपीठेयेत्रव्यवस्थिताः । तेगृह्णंतुमयादत्तमिममर्घंनमोनमः । आयुर्विद्यांधनंदत्तयशःशौर्यंचपुष्कलं । पुत्रान्दत्त
धनंदत्तसर्वान्कामांश्चदत्तमे । इत्यर्घंदत्वाअभीष्टंसंप्रार्थ्यगोभिलोक्तैर्मंत्रैर्नमस्कृत्यप्रार्थयेत् । ॐनमोरथआदित्यदीप्यमानः
स्वतेजसा । ज्योतिस्थःसर्वभूतेभ्यःससूर्यप्रीयतांमम ॥ द्विजराजमहातुंगतारापतिरनिंदित । मासेमासेक्षयोवृद्धिः
ससोमःप्रीयतांमम । बालःकुमारकोयस्तुरक्तवर्णःसुशोभनः । अव्ययःपृथिवीपुत्रःसभौमःप्रीयतांमम । सोमपुत्रोबुधः
सौम्योबुधोनाममहाग्रह । आदित्यपथगोयस्तुसबुधःप्रीयतांमम । बृहस्पतिर्बृहत्तेजोबृहद्बुद्धिर्बृहद्यशः । सुराणांचगुरुर्य
स्तुसगुरुःप्रीयतांमम । असुराणांगुरुर्यस्तुग्रहाणांपरमागतिः । शुक्रवर्णःशुक्रदीप्तिः सशुक्रःप्रीयतांमम । शनैश्वरःशनैश्चारि
रुग्ररूपोरवेःसुतः । कृष्णवर्णःक्रूरदृष्टिसशनिःप्रीयतांमम ॥ असुरःसिंहिकापुत्रोराहुश्चंद्रार्कमर्दनः । स्थापितस्तुनिमित्ता
र्थेसराहुःप्रीयतांमम ॥ आयांतुदेवगणःकेतुःकपोतवाहनः सानुचरःसुमेधाश्चसकेतुःप्रीयतांमम ॥ ततःप्रदक्षिणास्तुति
नमस्कारान्विधाय । अद्यपूर्वोच्चरितएवंग्रहगणविशेषण विशिष्टायांतिथौ आदित्यादिग्रहाणांस्थापितदेवतासहितानां
पूजनविधेर्यन्न्यूनातिरिक्तंतत्सर्वं आदित्यादिग्रहाणांप्रसादात्परिपूर्णमस्तु । ततःस्थापितकलशेवरुणंसर्वोपचारैर्यदाकदा
इतिमंत्रेणपूजयेत् । संपूज्यनमस्कुर्यात् । वरुणायनमस्तेस्तुनमःस्फटिकदीप्तये । नमस्तेश्वेतहारायजलेशायनमोनमः । तत
प्रार्थना । शंखस्फटिकवर्णाभश्वेतहारांबरावृत । पाशहस्तमहाबाहोदयांकुरुदयानिधे । ततोभूःस्वाहेत्याद्याहुति चतुष्टयं
हुत्वांउभयोश्चरुशेषेणस्विष्टकृद्धोमः । इदंमग्नयेवैश्वानरायनमः । ततोग्रहपीठस्यसमीपेस्थापित कलशोदकेनाभिषेकः
तत्रपत्नीवामभागस्थाभवेत् । अस्ययजमानस्यसर्वोपद्रव शांतिपूर्वकसर्वाभीष्टसिद्धार्थंवैदिकैःमंत्रैःपौराणैश्चाभिषेकमहं० ।
शन्नोदेवीआपोहिष्ठेत्यादयोः मंत्राः । गोभिलोक्ताश्वःधेनुः शंखस्तथानड्वान्हेमंवासोहयःक्रमात् । कृष्णागौरायसंछाग
एतावैदक्षिणाःस्मृताः । अभिषेकांतेआचार्यादिभ्योदक्षिणांदद्यात् । प्राङ्मुखउपविश्य उदङ्मुखानाचार्यादीन्पूजयेत् ।
तद्यथा । तिथ्यादिसंकीर्त्यकृतस्यसग्रहविनायकशांतिकर्मणः सांगतासिध्यर्थं आचार्यादीन्यथालाभोपचारैःपूजयिष्ये

इतिसंकल्प्ययथाविभवंपाद्याद्युपचारैरभ्यर्च्य । सुसंप्रोक्षितमस्त्वित्यादिकृत्वा । अस्यसग्रहविनायकशांतिकर्मणःसांगता सिध्यर्थं अमुकगोत्रायाअमुकप्रवरायाअमुकशाखाध्यायिने अमुकशर्मणेआचार्याय येदंवासोयुगंगार्हस्पत्यमिमांदक्षिणां तुभ्यमहंसंप्रददेनमम । आचार्यऽस्तु ॐप्रतिगृह्णामिस्वस्तीत्युक्त्वाक इदंकस्माअदादितिपठेत् । एवंब्रह्मपूजांविधाय । ऋत्विजोपिपूजयेत् । आदित्याग्रहाणांप्रीतयेधेन्वादिदक्षिणांदद्यात् । ततोहोमसंकल्पः । अस्मिन्यज्ञेयऋत्विग्भिःकृतो होमःपृथक्पृथक् । यस्ययस्यचदेवस्ययद्यद्द्रव्यंयथाहुतं । यावद्यावच्चसंख्याकंमंत्रेणयेनयेनवः ॥ संदेवःसपरीवारःप्रीयतां वरदोस्तुमे । सुप्रीतःशांतिदश्चैवपुष्टिदश्चभवत्विति । ततउत्तिष्ठन्नोजसासहपीत्वीशिप्रेअवेपयः । सोममिंद्रश्चमुसुतं ॥ सुतासोमधुमत्तमाः सोमाइंद्रायमंदिनः । पवित्रवंतोअक्षरन्देवान्गच्छंतुवोमदाः । यांतुदेवगणाःसर्वेपूजामादायकृत्स्नशः । ऋद्धिंचविपुलांदत्वापुनरागमनायच । इतिमंत्रैर्विनायकांबिकयोर्विसर्जनं । एभिरेवमंत्रैग्रहाणांच । ततःसमाचाराच्चरु शेषेणभद्रासनस्यपरितोबलिदानं होमकुंडेपिपरितोन्येनबलिदानद्रव्येणतच्चेत्थं । देशकालौसंकीर्त्यकृतस्यसग्रहविनायक शांतिकर्मणःसांगतासिध्यर्थं इंद्रादिदिक्पतिबलिदानमहंकरिष्ये । इंद्रायसांगायसपरिवाराय सायुधायसशक्तिकाये मंमाषभक्तबलिंसमर्पयामि । भोइंद्रदिशंरक्षबलिंभक्षसकुटुंबस्यास्ययजमानस्यायुः कर्त्तापुष्टिकर्त्ताशुभकर्त्ताभव । एवंभो अग्ने । भोयम । भोनिर्ऋति । भोवरुण । भोवायो । भोईशान । भोब्रह्मन् । भोअनंत । एवंस्थानद्वयेपिबलिदानंकृत्वा तंत्रशेषस्यसमाप्तिः । यथा ॥ व्याहृतित्रयहोमः । समिद्धोम । देवसवितरितिपर्युक्षणं । अदितेन्वमंस्थाइत्यादिभिः प्रसेकः । ततएवबर्हिषः । कुशमुष्टिमादायेत्यादिनायज्ञवास्तुकरणं । वसुभ्यःस्वाहा । प्रदक्षिणागमनादिपुनःपूरणांतं । सुसंप्रोक्षितमित्यादि । कृतस्यास्यसग्रहविनायकशांतिकर्मणः सांगतासिध्यर्थंब्रह्मणेपूर्णपात्रमहंसंप्रददेनमम । कृतस्ये त्याद्युच्चार्ययथासंपन्नेनांन्नेनब्राह्मणान्भोजनेनाहंतर्पयिष्ये । तेनकर्मांगदेवताःप्रीयंतां । कुमारिकात्रयंभोजयिष्ये । न्यूनातिरिक्तकरणदोषोपशांतयेभूयसींदक्षिणांनानागोत्रेभ्यो ब्राह्मणेभ्योनानानामभ्योहंसंप्रदास्ये । ततश्चत्वरेपूजां बलिदानार्थंगच्छेत् । कृताकृताद्यूपहारजातंसर्वंशूर्पेकृत्वाचत्वरेगत्वा संमार्जनोपलेपनादिभिर्भूमिं संशोध्यतत्रहरिद्राचूर्णेन





पंकजंकुर्यात् । पूर्वंषट्कोणं । तदुपरिवृत्तं । तत्रविंशतिपत्राणि । द्वितीयवृत्तेद्वात्रिंशत्पत्राणि । तद्बहिश्चतुरस्रंचतुर्द्वारोपेतं । एवंपद्मंकृत्वा तत्रसर्वतोमुखान्दर्भानास्तीर्य प्राङ्मुखउपविश्य आचाम्यप्राणानायम्य देशकालौसंकीर्त्य ममसर्वोपद्रव शांतिपूर्वकसर्वाभीष्टसिध्यर्थंचत्वाराधिष्ठातृदेवतानां पूजापूर्वकंबलिदानमहंकरिष्ये । एवंसंकल्प्यतत्रपूज्यदेवानावाहयेत् । षट्कोणेमोदादीनावाहयामि । चतुरस्रेदिक्पतीनावाहयामि । एवमावाह्यपूजांकुर्यात् । षट्कोणेषुपूर्वादिप्रादक्षिण्येन । मोदायनमः । प्रमोदायनमः । सन्मुखायनमः । उन्मुखायनमः । विघ्नहर्त्रेनमः । विनायकायनमः । द्वितीयवृत्तेविंशति कोष्ठेषुप्रागादिप्रादक्षिण्येन । विमुखायनमः । श्येनाय० बकाय० कलहाय० भैरवाय० विनायकाय० कूष्मांडाय० राजपुत्राय० । यज्ञियाविक्षेपाय० । कुलंगाममारिणे० यूपकेशिने० शूर्परक्रोडाय० हैमवताय० जृंभकाय० विरूपाक्षाय० लोहिताक्षाय० वैश्रवणाय० महासेनाय० महादेवाय० महाराजायनम० ॥ ॥ तृतीयवृत्तेद्वात्रिंशत्कोष्ठकेषु । प्रागादि । आदित्येभ्यो० वसुभ्योनमः । मरुद्भ्यो० अश्विभ्यां० रुद्रेभ्यो० सुपर्णेभ्यो० पन्नगेभ्यो० ग्रहेभ्यो० असुरेभ्यो० यातुधानेभ्यो० पिशाचेभ्यो० मातृभ्यो० नागेभ्यो० शाकिनीभ्यो यक्षेभ्यो० वैतालेभ्यो० योगिनीभ्यो० पूतनाभ्यो० शिवाभ्यो० जृंभकेभ्यो० सिद्धेभ्यो० गंधर्वेभ्यो० मालेभ्यो० विद्याधरेभ्यो० नरेभ्यो० दिक्पालेभ्यो० लोकपालेभ्यो० विघ्नेभ्यो० विनायकेभ्यो० ब्रह्मादिमहर्षिभ्यो० भूतेभ्यो० प्रेतेभ्यो० भूगृहेदिक्पतीन् । इंद्रायेत्यादिसंपूज्य । इंद्रादिभ्यो बलिदानदत्वा अन्येभ्योबलिंदद्यात् । स्वकर्मकाश्चयेसंतिप्राच्यांदिशिसमाश्रिताः । निशाचराःप्रसन्नास्तेप्रतिगृह्णंत्विमं बलिंविनायक क्षेत्रपालायेचान्येअन्नकांक्षिणः ॥ पूषाद्याःपरिषदश्चैवतेपिगृह्णंत्विमंबलिं ॥ वृक्षेषुपर्वताग्रेषुयेविदिक्षुच संस्थिताः । भूमौव्योम्निस्थितायेचतेपिगृह्णंत्विमंबलिं । भूतानिराक्षसाश्चैवयेत्रतिष्ठंतिकेचन । तेसर्वेतृप्तिमायांतुबलि दानेनतर्पिताः एवंबलिदानंकृत्वा मस्तकेशूर्पस्थबलिदानमंत्रान्पठेत् । तेयथा । बलिंगृह्णंत्विमेदेवाआदित्यावसवस्तथा । मरुतश्चाश्विनौरुद्राः सुपर्णाःपन्नगाग्रहाः । असुरायातुधानाश्चपिशाचामातरोगणाः । डाकिन्योयक्षवैतालायोगिन्यः पूतनाःशिवाः । जृंभकाःसिद्धगंधर्वामालाविद्याधरानराः । दिक्पालालोकपालाश्चयेचविघ्नविनायकाः । जगतांशांति

कर्त्तारोब्रह्माद्याश्चमहर्षयः । माविघ्नंमाचमेपापंमासंतुपरिपंथिनः । सौम्याभवंतुतृप्ताश्चभूतःप्रेतासुखावहा ततोभूमौशूर्पे धृत्वाबलिमनवलोकयत्यजमानोः ततोवेदमीतमंगलघोषेणगृहमागछेत् । ततितिलकादिमांगल्यंकृत्वाआशिषोनैगमाः । ततोभोभोवह्नेमहाशक्तेसर्वकर्मप्रसाधका । कर्मांतरेपिसंप्राप्तेसान्निध्यंकुरुसादरंइत्यग्निं विसृज्यवामदेव्यंगायेत् । ततआचार्याययज्ञसामग्रींदद्यात् । इमांसग्रहविनायकांशांतिकर्मसाधनसामग्रींस ग्रहविनायकांविकयोःप्रीत्यर्थं आचार्यायअहं संप्रददेनमम । ततोदीनांधकृपणेभ्योन्येभ्यश्च यथाविभवमन्नवस्त्रदक्षिणादिदद्यात् ॥ ततःकर्मपरिपूर्णतांप्रार्थयेत् ॥ अद्यपूर्वोच्चरितएवं ग्रहगणविशेषण विशिष्टायांतिथौ सग्रहविनायकशांतिकर्मणः कृतस्यविधेर्यन्यूनमतिरिक्तं तत्सर्वं श्रीपरमेश्वर प्रसादात्दुपविष्ट ब्राह्मणानांप्रसादात्परिपूर्णमस्तु ॥ ॥ इति सग्रहविनायकशांतिः ॥ ॥ श्रीभवानी शंकराभ्यांनमः ॥ शांतिचिंतामणौस्वीयेनिर्णीतशांतिकर्मणः । करोमिपद्धतिःसम्यगृक्षदोषविनाशिनीं । तत्रादौशांत्युपयुक्ताःसंभाराः । श्रीफलानि९ कुंकुमं । पूगीफलानि । पंचकलशा ॥ एकःशतछिद्रोन्यः । एकावर्द्धनी । कलशानां वर्द्धन्याश्चग्रवावेष्टनवस्त्राणि । उदुंबरवटाश्वत्थप्लक्षाम्राणांत्वक् । एषामेवपर्णानि । पंचामृतं । पंचगव्यं । शतौषधीनां मूलानि । नवरत्नानिसर्वौषध्यः । अष्टमृत्तिकाः । सप्तधान्यानि । निरृतिप्रतिमा । सूक्ष्माणिषोडशवस्त्राणि । ग्रहाणां स्थापनार्थंवस्त्रंनिर्ऋतेश्च । सुवर्णमूलं । दंपत्योरुपवेशनार्थमाचारप्राप्तमेकमासनं । आछादनार्थंकंबलः । शिक्यं । वंशपात्रं । दंपत्योःपरिधानवस्त्रमेकंशिशतमूलंबंधनार्थंखंडः । मुखावलोकनार्थंकांस्यपात्रं । होमार्थंतिलाः । यवाश्च । व्रीहयः । अन्यदपिहोमोपयोगि । दुग्धं । मधु । शर्कराः । तांबूलानि । पुष्पाणि । चंदनंकुंकुमं । कर्पूरादिसुगंधिद्रव्याणि । होमार्थं वस्त्रखंडः । चरुस्थालीद्वयं । आज्यस्थाली । मातृस्थापनार्थंरक्तवस्त्रखंडः । रक्तंसूत्रंकौसुंभं । स्वस्तिवाचनार्थं ताम्रमयं कलशद्वयं । ग्रहस्थापनार्थंतंडुलाः । रुद्रकलशः । स्तंभद्वयं । तिर्यक्काष्ठं । स्रुक्स्रुवौ । मेक्षणद्वयं । शततीर्थोदकानिकूपजलानिवा । पुण्यनदीसंगमोदकं । गंगोदकंच । ग्रहाणांप्रत्येकंधूपाः । नैवेद्यानिच । मेषशृंगचूर्णं । अत्रानुक्तंवस्तुवक्ष्यमाणप्रयोगादुपलब्धव्यं ॥ ॥ इतिशांत्युपयुक्तासंभाराः ॥ ॥ अथकर्मक्रमः ॥ अत्रप्रकृतिवद्विकृतन्यायात् । ग्रहशांति





वत्सर्वत्र । श्मश्रुकर्ममलापकर्षण स्नानाहतवस्त्रधारण शिखाबंधनकर्मांगाचमनादिकंकर्मादित्वेन प्राक्विधायप्रधान संकल्पः । ताम्रपात्रेशुद्धोदकाक्षतकुसुमानिप्रक्षिप्य गुरुंगणपतिं नत्वासुमुखश्चेत्यादिपठित्वा देशकालौसंकीर्त्यममास्य शिशोर्मूलनक्षत्रस्यामुकांशेजातस्य तज्जनितदोषक्षयकामः श्रीपरमेश्वरप्रीतयेसग्रहमूलनक्षत्रशांत्याअहंयक्षे इत्युच्चार्यताम्रपात्रस्थंजलंक्षिपेत् । ततोमातृपूजापूर्वकमाभ्युदयिकंश्राद्धंकार्यं । तत्रसंकल्पेविशेषः । सग्रहमूलनक्षत्रशांतिकर्मणोंगत्वेन गौर्यादिचतुर्दशमातृणांवसोर्द्धारा सहितानांस्थापनप्रतिष्ठा पूजनमहंकरिष्येइतिसंकल्प्य यथाविधिनामातृपूजांविधाय आयुःशांतिंपठित्वा वैश्वदेवंविधाय वृद्धिश्राद्धंकार्यं तत्रगोत्राणामित्याद्युच्चार्यममास्य शिशोर्मूलनक्षत्रजातशांतिकर्मणोंगत्वेनविहितं श्राद्धंपार्वणद्वयं विश्वेदेवापूर्वकमर्घपिंडसहितं युष्मदनुज्ञयाश्राद्धमहंकरिष्य इतिसंकल्प्य । श्राद्धंयथावत्कुर्यात् । श्राद्धंसमाप्यपूर्वसंपादितमंडपेहोमार्थंकुंडं । स्थंडिलंवाहस्तमात्रंसमचतुरस्रं यथाशास्त्रंविधायतस्मादैशान्यां ग्रहपीठंत्रिंशांगुलोपरिसवप्रंकुंडमानं द्वादशांगुलोच्चंकार्यं । एवंनिर्ऋतिकोणेहस्तमात्रं । ग्रहपीठवदुच्छ्रितं कार्यंनिरृते स्थापनार्थं । एवंपीठानिविधायऋत्विग्वरणं । तत्रआचारप्राप्तमर्घंकृत्वा सोमसामादिपठित्वा देशकालौ संकीर्त्य आयुरारोग्यपुत्रादिसुख श्रीप्राप्तयेमम । आपद्विघ्नविनाशाय शत्रुबुद्धिक्षयायच । विशेषकाम्यहोमेनसहितंसमिदादिभिः । सग्रहांमूलशांतिंचकर्तुंयूयंप्रसीदत । स्वागतंवो० । प्रतिगृह्यतां । इत्युक्त्वाब्राह्मणान्प्रतोर्घपात्रंस्थापयेत् । तत आचार्यंप्राङ्मुखमुपवेश्यस्वयमुदङ्मुखोवृणुयात् । अक्षतानादायदक्षिणंजान्वालभ्यगोत्राद्याभाष्य सग्रहमूलनक्षत्रशांतिकर्मणाहंयक्षेतत्रत्वामहमाचार्यंवृणे । ततस्तंसंपूज्योदङ्मुखंब्रह्माणंमुपवेश्य स्वयंप्राङ्मुखोवृणुयात् । त्वामहंब्रह्माणंइति विशेषः । अन्यानप्येवमेववृणुयात् । त्वाममहंपूर्वकलशेसूक्तजापकंवृणे । एवंदक्षिणकलशेपश्चिमकलशे । उत्तरकलशे । रुद्रकलशेरुद्रसूक्तमृत्युंजयमंत्रजपार्थं त्वामहंवृणे । एवंग्रहाणांमंत्रजपहोमार्थं त्वामहमित्यादि ॥ ततआत्मपादप्रक्षालनं वरणश्राद्धं । ततःस्वस्तिवाचनं ॥ ततःफलहस्तःप्रार्थयेत् अस्ययागस्यनिष्पत्त्यैभवंतोभ्यर्थितामया । सुप्रसादंप्रकर्त्तव्यं शांतिकर्मविधानतः । इत्युक्त्वाफलमग्रेनिधायप्रणमेत् ततआचार्यकुंडेस्थंडिलेवापंचभूसंस्कारान्विधाय वरदनामानमग्निं

प्रतिष्ठापयामींत्यभिधायाग्निंसंस्थाप्य सुसमिध्यसमिधमग्नौतूष्णींहुत्वा भूजपपरिसमूहनेकृत्वाब्रह्माणमुपवेश्यागत्यपात्रा
ण्यासादयेत् । ततोगायत्र्याभिमंत्रितोदकेनपात्राण्यासादनक्रमेणसंप्रोक्ष्य चरुस्थालीद्वयमग्नावधिश्रयेत् । ततःपश्चादग्नेः
प्रागग्रानदर्भानास्तीर्यतेषुउलूखलादिसंस्थाप्य हविरुलूखलेनिर्वपेत् । निर्ऋतयेत्वाजुष्टंनिर्वपामि इतिसकृन्निरूप्यद्विः
स्तूष्णीमित्यादिप्राकृतं । अयंपायसश्चरुः । ग्रहाणांयथावन्निर्वापः । स्थालीद्वयेपितंडुलानामावापोनिरूतिचरुपूर्वकः ।
दक्षिणस्यांनैरृतश्चरुः । तदुत्तरतोग्रहाणांपृथक्मेक्षणाभ्यांअवघट्टनं । ततोदेवतानांस्थापनं । पूर्वनिर्ऋतिकोणस्थपीठे
निर्ऋतेःस्थापनं । तत्रोपविश्यदेशकालौसंकीर्त्य अस्यशिशोर्मूलनक्षत्रजनितदोषनिवृत्यर्थं नक्षत्रदेवतायाःस्थापनमहं
करिष्ये । इतिसंकल्प्यस्थापनंकुर्यात् । तत्रपूर्वनिर्ऋतेऽप्रतिमाया अग्न्युत्तारणंकार्यं । यथा । अश्वादिस्थानस्थाभिःपंच
मृत्तिकाभिः स्योनापृथिवीतिमंत्रेण प्रतिमायाः प्रक्षालनं । ततोदुग्धादिपंचामृतेनस्वस्वमंत्रैःक्षालनं । ततःपंचगव्येन ।
गायत्र्यागोमूत्रेणगावश्चिदितिगोमयेन । चक्रंयंदस्येतिगोक्षीरेण । दधिक्राव्णेतिदध्ना । घृतवतीतिघृतेन । ततःस्ताम्रादि
पात्रेतांप्रतिमांनिधाय । अग्नआयाहीतिदशर्तिजलधारांपातयन्नग्निपदैर्विनापठेत् । एवंवारत्रयंपठित्वा चतुर्थ्यामावृता
वग्निपदयुक्तांदशर्तिंपठेत् । एवमग्न्युत्तारणंकृत्वा पीठोपरिवस्त्रमास्तीर्य । तदुपरितंडुलैरष्टदलंकृत्वा तद्बहिश्चतुरस्त्रंचतु
र्द्वारोपेतंकुर्यात् । ततस्तांप्रतिमांवेत्थाहीतिमंत्रेण पद्मकर्णिकायांपूर्वकृततंडुलपुंजोपरिस्थापयेत् । कर्णिकायामेवतद्दक्षिण
स्यांइंद्रप्रतिमामधिदैवतसंज्ञांयत इंद्रेतिस्थापयेत् । दुत्तरतोजलप्रतिमामत्यधिदैवतसंज्ञां आपोहिष्ठेतिस्थापयेत् । ततश्चतु
र्दिक्षुपूर्वादिकलशान्यथाविधिनास्थापयेत् । आदौवर्द्धनीसंस्थाप्य वर्द्धनीस्तेनवारिणाकलशानांपूरणं । वर्द्धन्यास्थापनं
केचिन्नकुर्वंति । स्थापनपक्षेस्थापनविधिर्वक्ष्यमाणोःत्रज्ञेयः । इदंकलशस्थापनमृत्विक्कर्तृकमितिकेचित् । तेषुपंचत्वगुदकं
पुण्यतीर्थादिशतोदकंसमन्यायंतीतिमंत्रेणपूरणीयं । त्वमिमाओषधीरितिसर्वौषध्यः । स्योनापृथिवीत्यष्टमृत्तिकाः ।
गुग्गुलादि । सप्तबीजानि । च । पंचगव्यंगजमदान्वितंप्रक्षेप्यं ॥ शौनकाद्युक्तंग्रंथेषुपद्मकर्णिकायाशतप्रस्रणंकुंभंविधाय
तदुपरिवंशपात्रंनिधायतस्मिनप्रतिमास्थापनंमित्युक्तं । पद्मकर्णिकायांस्थापनमित्युक्तं । पद्मकर्णिकायांस्थापनमितिव





त्युसोमाभिप्रायः । ततःप्रतिमायांनिर्ऋतिरिंद्रस्यअपांचआवाहनं । नीलवर्णखड्गचर्मधरं ऊर्ध्वकेशंनरवाहनं कालिका
प्रियंनिर्ऋतिमावाहयामि । तद्दक्षिणे । भगवंतंचतुर्दंतगजारूढंवज्रांकुशधरंप्राचीपतिं नानाभरणभूषितमिंद्रमावाहयामि ।
तदुत्तरस्थांस्त्रीरूपधारिणीः श्वेतवर्णमकरवाहनाः पाशकलशधारिणीर्मुक्ताभूषणभूषिताआपआवाहयामि । ततःकलशेषु
यदाकदेतिवरुणमावाह्यसर्वेसमुद्राःसरितः सरांसिचनदानिच । आयांतुयजमानस्यदुरितक्षयकारकाः इतिआवाहयेत् ।
ततःप्रतिष्ठा । अक्षतान्हस्तेआदायप्रतिष्ठा मंत्रौपठित्वा अद्यसमस्तपुण्यकालावयवयोगेषु एवंगुणविशेषणविशिष्टायां
तिथौअस्मिन्पीठेस्थापितदेवताः सुप्रतिष्ठावरदाभवंतु । इत्युक्त्वाअक्षतान्क्षिपेत् । ततःपूजा । साचषोडशोपचारापंचो
पचारावा ॥ वेत्थाहीतिमंत्रेणनैरृतेपूजनं । रक्तचंदनं । कृष्णसितादिपुष्पाणिमेषशृंगचूर्णेनधूपः । नालिकेरेणार्घः ।
पायसापूपमोदकादिनैवेद्यं । यतइंद्रेतिमंत्रेणेंद्रंसर्वोपचारैःपूजयेत् । उदुत्तमंवरुणेतिंअपांपूजां । यदाकदेतिकलशेषुवरणं
पूजयेत्सर्वोपचारैः । ततःकलशानामभिमंत्रणं । पूर्वकलशेसांगोरुद्रजपः । अष्टोत्तरसहस्रंशतंवामृत्युंजयमंत्रजपः ।
राक्षोघ्नानिदक्षिणे । स्वस्त्ययनानिपश्चिमे । तानिचअद्योध्यादीनि । अन्यानिच । अभित्वोवीयतइंद्र । रथंतरमुत्तरे । ततः
कलशानांश्लोकैरभिमंत्रणं । कलशस्यमुखेविष्णुः कंठेरुद्रःसमाश्रितः । मूलेतस्यस्थितोब्रह्मामध्येमातृगणाःस्मृताः ।
कुक्षौतुसागराः सप्तसप्तद्वीपावसुंधराः । ऋग्वेदोथयजुर्वेदः सामवेदोह्यथर्वणः । अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः ॥
ततोग्रहाणांस्थापनं यथाविधिना । ऐशान्यांकलशस्यच । आवाहनं । प्रतिष्ठापूजाच । ततश्चरुद्वयेपिश्रुताभिघारणाद्याज्य
भागांतंप्राकृतं । ततःकुंडात्पश्चिमतस्तंभद्वयंनिखाय तदुपरितिर्यक्काष्ठमुदगग्रंसन्यस्य तत्रमुंजमयशिक्यस्यबंधनं । ततः
श्वेतवस्त्रेणशतमूलानिसुवर्णमयंमूलंअष्टमृत्तिकाः सप्तबीजानिदेवदारुपद्मंवचांलोध्रं प्रियंगुंचनालिकेरादीनिफलानिबध्वा
वंशपात्रोपरिसन्यस्यतंवंशपात्रं शतप्रस्रवणकुंभोपरिअभिषेक कालेन्यस्तव्यं । ततःआचार्यःपरिधानवस्त्रमादायकुंकुमे
नाभ्यर्च्यदंपत्योःपरिधानार्थमेकवस्त्रंकुंकुमतिलकपूर्वकंतयोर्हस्तेदद्यात् । ततस्तावेकमेवोभौपरिदधतः तस्यप्रमाणंहस्त२४।
ततोसाधिप्रत्यधिदैवस्यनिर्ऋतेःपूजनं । रुद्रजपंकुंभेरुद्रस्यपूजनं । पुनःकुंभस्यकुशादिनास्पृष्ट्वामृत्युंजयमंत्रंजपेत् । ततः

संपूज्यनमस्कृत्यमार्थयेत । मृत्युंजयमहादेवत्राहिमांशरणागतं । मूलनक्षत्रजातस्यशिशोर्दोषंविनाशय । जनित्रीसहितं
वालममुंरक्षसदाशिव । अभिषिंचाम्यहंमंत्रैरनुज्ञांदेहिशंकर । ततोनिरूतिसंपूज्यमार्थयेत् । निरूतेत्वंमहाबाहोसर्वदोष
विनाशक । मसादयेत्वांदेवेशमभिषेकार्थमादृतः । एवंदेवमभिषेकार्थंमसाद्यअग्नेःपश्चादासनंद्विहस्तदीर्घंहस्तमात्रविस्तृत
मुदगग्रंसन्यस्यतावुभौपविशतः । स्त्रीतुबालकमुत्संगेकृत्वोपविशति । ततःशतप्रस्रवणंकुंभंसप्तवीजानि अष्टौमृत्तिकाःपंच
गव्यंपंचरत्नानिशतमूलानि निःक्षिप्यमुखेपंचपल्लवानकृत्वा मुखंवस्त्रद्वयेनावेष्ट्यतंकलशं शिक्येआरोप्यपूर्वंवद्धशतौषध्या
दिकंवंशपात्रेकृत्वा वंशपात्रंशतछिद्रंकुंभोपरिस्थापयेत । ततःकलशोदकैर्वंशपात्रेन्यस्तशतौषध्याद्युपरिप्रक्षिप्ता जलधारां
कुंभस्यशतछिद्रैर्यथाभिषेकोभवे दैवमभिषेकःकार्यः । ततमंत्राः । अयमूर्जेतिफलस्नानं । त्वमिमाऔषधीरितिसाम्ना
औषधीः । स्नानं । ततोवरुणं । शन्नोदेव्यापोहिष्ठोयादिःपावमानीभिस्तरन्छमंदीभिरेतोन्विंद्रं तमुष्टवामनकिइंद्रत्वदुत्तरं
पवित्रंतेत्यादिऋग्भिरभिषेकः । कयानश्चित्रेत्यादितिसृभिः । । अथसामभिषेकः । सोमंराजा । पावकानईया । आनो
मित्रा । प्रमित्रायत्रीणि । यदाकदात्रीणि । कोअद्ययुङ्क्ते । घृतवतीद्वे । इतिवारुणंस्नानं । अथैंद्रं । तद्वोगायेत्र्यादिचत्वारि ।
यस्तेनूना । इंद्रसाद्वे । इंद्रमिद्वे । त्रातारमिंद्र । इंद्रायेंदोसामाष्टकं । आहर्यतेतिचत्वारि । सहस्रशीर्षेत्यादिसामषट्कं ।
सोमःपुनासामषट्कं । आज्यदोहानित्रीणि । इदंविष्णुः । अबोधिया । इत्याद्यरिष्टवर्गः । सोमानांसरणं । श्नत्राष्टकं ।
एऊचातृचंएहसंअभित्यामेषं । गायत्र्यागायत्रं । विदामघवन्निति । अथश्लोकैः । सहस्राक्षंइत्यादि । सुरास्त्वेत्यादयः ॥
योसौवज्रधरोदेवोमहेंद्रोगजवाहनः । मूलजातशिशोर्दोषंमाता पित्रोर्व्यपोहतु । योसौदंडधरोदेवोधर्मोमहिषवाहनः ।
मूलजातशिशोर्दोषंव्यपोहतुयमोमम । योसौखड्गधरोदेवोनिर्ऋतीराक्षसाधिपः । प्रशामयतुमूलोत्थंदोषंगंडांतसंभवं ।
योसौपाशधरोदेवोवरुणश्चजलेश्वरः । नक्रवाहःप्रचेतानोमूलोत्थाघंव्यपोहतु । योसौदेवोजगत्प्राणोमारुतोमृगवाहनः ॥
प्रशामयतुमूलोत्थंदोषंबालस्यशांतिदः । योसौनिधिपतिर्देवः पिनाकीवृषवाहनः । अश्लेषामूलगंडांतंदोषमाशुव्यपोहतु
विघ्नेशक्षेत्रपोदुर्गालोकपालानवग्रहाः । सर्वदोषप्रशमनंसर्वेकुर्वंतुशांतिदा ॥ ततोवस्त्रांतरितकुंभाभ्यांस्नापनं । ततःशुक्लां





वरधरः शुक्लमाल्यानुलेपनोभूत्वा कांस्यपात्रस्येघृतेशिशोर्मुखावलोकनंकुर्यात् । स्वास्यमप्याज्येविलोकयेत्पत्नी च ।
आज्यंतेजःसमुद्दिष्टमाज्यंपापहरंपरं । आज्यंसुराणामाहारमाज्येलोकाःप्रतिष्ठिताः । दिविभुव्यंतरिक्षेस्थंयन्मेकिल्बिष
मागतं । तत्सर्वमाज्यसंस्पर्शात्प्रनाशमुपगच्छतु इतिमंत्रद्वयेनअंगात्संश्रवसीत्यादिमंत्रैः शिशोरंगस्पर्शः । ततोहोमः ।
तत्रपूर्वंचर्वाहुतयः । तत्रमंत्राः । अभिब्रह्मा । इदंनिर्ऋतयेनममेतिसर्वाहुतीनांत्यागाः । वेत्थाहिः । परिकोशं । एष
प्रकोशे । चतस्रश्चर्वाहुतयः । ततोग्रहाणांचरुहोमः । ततःस्रुवेणपंचदशाज्याहुतयः । तत्रमंत्राः । आवोराजाइदंरुद्राय ।
सोमानांस्वरणं । इदंब्रह्मणस्पते । अप्साइंद्राय०इदमिंद्राय वायवेवरुणायमरुद्भ्यः सोमायविष्णवे० प्रवोमहेमहेवृधे०
इदमिंद्राय० इशानईमा । इदंसोमाय । यतइंद्र । इदमिंद्राय । तुचेतुना । इदमादित्येभ्यः । इंद्रायेंदो० इदमिंद्राय ।
नाकेसुपर्ण० इदंवेनयमवरुणेभ्यः । घृतवतीइदंवरुणाय । अभित्यंदेवं । इदंसवित्रे । अग्निंदूतं । इदमग्नये । वातआवातु ।
इदंवायवे । सोमंराजानंवरुण । इदंविश्वेभ्योदेवेभ्यः । इदंविष्णुः । इदंविष्णवे । अधिदैवतमंत्रेणाष्टौआहुतयः । यत
इंद्रेति । प्रत्यधिदैवतमंत्रउदुत्तममिति । ततःसमिद्धोमोवेत्थाहीति ग्रहमंत्रैराज्याहुतिपूर्वकं समित्तिलादिभिर्होमः । वेत्था
हीतिमंत्रेणतिलाहुतिः । अष्टोत्तरसहस्रंशतंवा । अधिप्रत्यधिदेवयोश्चयतइंद्रेत्यनेनउदुत्तममित्यनेनच । ततोमृत्युंजय
मंत्रेण । दूर्वाहोमः । अष्टोत्तरसहस्रसंख्यया । होमांतेपूजनमुभयत्राततः प्रायश्चित्तंहुत्वोभयोश्चरुशेषेणस्विष्टकृत् ।
पूर्णाहुतिः । ग्रहकलशोदकैरभिषेकः । सुसंप्रोक्षितमित्यादि । अस्यमूलशांतिकर्मणऽसांगतासिध्यर्थं आचार्यायगांतुभ्य
मित्यादि । ब्रह्मणेपूर्णपात्रं । कृष्णागौः । कृष्णवासइतिपद्धतिकृतः । ग्रहाणांस्वस्वदक्षिणाः । होमसंकल्पः । सच
अस्मिन्यज्ञेयऋत्विग्भिःरित्यादि । ग्रहाणांनिर्ऋतिदेवस्यविसर्जनमंत्रसमाहूयंतेवाततोबलिदानं । व्याहृतित्रयहोमः ।
समिद्धोमः । अनुपर्युक्षणं । कुशमुष्टिहोमः । वसुभ्यःस्वाहांतेपंचामृतेनाभ्यक्तानिमूलानिजुहुयात् । सुवर्णमूलंवर्जं ।
मूलायस्वाहा । महामूलायस्वाहा । मूलदेवतायै० मूलकर्मणे०सर्वमूलाय० विश्वकर्मणे० प्रदक्षिणागमनं० चमसंनि
नयनं । पुनःपूरणं । ब्राह्मणभोजनसंकल्पः । अस्यमूलशांतिकर्मणः सांगतासिध्यर्थंअष्टोत्तरशतसंख्यान्ब्राह्मणान्

भोजनेनाहंतर्पयिष्ये । तेनकर्मांगदेवताप्रियंतां । भूयसीसंकल्पादि । आशिषोनैगमाः । कुंभवस्त्रप्रतिमादिकआचार्याय दद्यात् । मूलनक्षत्रजातस्यशिशोर्दोषापनुत्तये । संप्रयच्छामितुभ्यंमेनिर्ऋतिप्रीयतांसदा । दंपतीपरिधानवस्त्रदानमंत्रमपि केचित्पठंति ॥ विकृतंयच्चमेकिंचिद्देहेतिष्ठतिगर्हितं । तत्सर्वंनाशमायातुनिर्दोषास्तुसुपुत्रिणि ॥ ॥ इतिमूलशांतिप्रयोग पद्धतिःसमाप्ता ॥ ॥ अथाश्लेषाजातशांतिप्रयोगः ॥ तत्रसर्वंमूलशांतिवत्विशेषोभिधीयत्ते ॥ सौवर्णीसर्पाकाराप्रतिमा नक्षत्रदेवतायाःकार्या ॥ अन्यत्संभारजातंसर्वंपूर्वोक्तंशांतिवदत्रापिभवति घृतगुग्गुलुर्धूपे ॥ अथकर्मक्रमः ॥ प्रधान संकल्पेदेशकालौसंकीर्त्य ममास्यशिशोरश्लेषानक्षत्रस्यामुकांश जातस्यतज्जनितदोषक्षयकामः श्रीपरमेश्वरप्रीतयेसग्रहा श्लेषानक्षत्रशांत्याख्यंकर्मकरिष्ये इतिसंकल्पे । ततोमातृपूजाभ्युदयश्राद्धादि । तत्रसंकल्पे । सग्रहाश्लेषानक्षत्रशांतिकर्मणोंगत्वेनविहितं गौर्यादिचतुर्दशमातृणामित्यादि । वृद्धिश्राद्धेपिगोत्राणामित्याद्युच्चार्यसग्रहेत्यादिपूर्ववत् । श्राद्धंसमाप्य ब्राह्मणानांवरणंतत्रप्रार्थनायां । आयुरारोग्येत्याद्यारभ्य सग्रहांसर्पांशांतिंचकर्त्तुंयूयंप्रसीदत । स्वागतंवोइत्यादि । वरणेगोत्राद्याभाष्य सग्रहाश्लेषानक्षत्रशांतिकर्मणाहं यक्ष्येतत्रत्वामहमाचार्यंवृणेइति । सर्वमन्यत्पूर्ववत् । वरणागमर्चनं कृत्वापूर्ववत्स्थंडिलकुंडादिकार्यं सर्पेभ्यस्त्वाजुष्टंनिर्वपामीतिनिर्वपेत । पायसश्चरुः । निर्ऋतिवरुणयोर्मध्येनक्षत्रदेवता स्थापनंकार्यं । प्राच्यामितिकेचित् । पीठवस्त्रमास्तीर्यतदुपरितंडुलैरष्टदलंविधाय तद्बहिश्चतुरस्रं चतुर्द्वारंविधायनक्षत्र देवतांस्थापयेत् । तत्रादौदेशकालौसंकीर्त्य अस्यशिशोःसार्पनक्षत्रजातदोषांतये नक्षत्रदेवतास्थापन पूजनमहंकरिष्ये इतिसंकल्प्यस्थापनंकार्यं । प्रतिमाश्चआग्न्युत्तारणंकृत्वा कर्णिकायांतांप्रतिमांयांसंधामितितंडुलपुंजेसंस्थाप्य कर्णिकाया मेवदक्षिणस्यांबृहस्पतेपरिदीया इतिबृहस्पतिप्रतिमांसंन्यस्यउत्तरस्यांपितृणां प्रतिमांएतपितरइतिसंस्थापयेत् । ततः पीठात्चतुर्दिक्षुकलशान्पूर्ववत्स्थापयेत् ॥ तत्रादौवर्द्धनीस्थापनं । तत्रसर्वंकलशस्थापनवत् । पूर्णपात्रनिधानांतेतीर्था वाहनं । गंगाद्याःसरितःसर्वास्तीर्थानिजलदानदाः । आयांतुवर्द्धनीसंस्थेजलेपापौघनाशनाः । ततोयदाक्रदेतितत्र वरुणमावाह्यप्रतिष्ठांकृत्वावर्द्धनीस्थदेवानांपूजनमहंकरिष्य इतिसंकल्प्यसंपूज्यप्रार्थयेत् ॥ आधारःसर्वभूतानाव्यादिभूता





सिवैयतः । आपोविभर्पिसंशुद्धास्तासुविष्णुःसमास्थितः । तस्मात्वमसितद्रूपासर्वकामप्रदेशुभे । मृन्मयित्वंमहापूजा महातीर्थोदकान्विता । वर्द्धनित्वंजगन्माताभवत्वंकुलवर्द्धनी । तवतोयेनकलशान्जपार्थंपूरयाम्यहं ततोवर्द्धनीस्थजलेन कलशानांपूरणंमंत्रपूर्वकं । पूर्वोक्तद्रव्याणांकलशेषुप्रक्षेपः । तत्रस्थापितनक्षत्रदेवप्रतिमायांआवाहनं ॐभूर्भुवःस्वःअक्ष सूत्रधरान्कुंडलिका पुच्छयुक्तानेकभोगांस्त्रिभोगान् भीषणानसर्पानावाहयामि । ततःकर्णिकायामेव दक्षिणभागे । ॐभूर्भुवःस्वःभगवन्बृहस्पतेसमस्तदेवताचार्यांगिरसगोत्रसिंधु देशेश्वरदिसुवर्णसदृशांगद्युते चतुर्भुजदंडकमंडलक्षसूत्र वरदानांकितकरपीतांबरमाल्यानुलेपन पुष्परागमयाभरणरमणीय समस्तविद्याधिपतेसुरगुरो इहागच्छेहतिष्ठइतिबृहस्प तिमावाहयेत् । अथोत्तरेपितृनावाहयेत् । ॐभूर्भुवःस्वः श्यामवर्णश्चतुर्भुजारुद्राक्षवराभयकमंडलुधराः पितरइहागच्छेह तिष्ठत । ततःकलशेषुयदाक्रदेतिवरुणमावाह्य सर्वेसमुद्राइतिमंत्रेणतीर्थान्यावाहयेत् । ततःप्रतिष्ठामंत्रौपठित्वा अस्मिन् पीठेस्थापितादेवताः सकलशाःसुप्रतिष्ठिताइत्युक्त्वा अक्षतान्क्षिपेत् । ततःपूजायांसंधामितिमंत्रेणसर्पाणांपूजा । बृहस्पते परिदीयेतिबृहस्पतेः । एतपितरइतिपितृणां । श्वेतंपीतंचंदनं । श्वेतपीतानिपुष्पाणि । गुग्गुलोधूपोऽगरुमिश्रः । दुग्धंसर्पेभ्यो नैवेद्यं । बृहस्पतयेदध्योदनंपितृभ्यःपायसान्नं । यदाक्रदेतिकलशेषुवरुणस्यपूजा । ततःकलशाभिमंत्रेणपूर्ववत् । सामभिः श्लोकैश्च । ततोग्रहाणांस्थापनंयथाविधिना । ऐशान्यांकलशस्य । आवाहनं । प्रतिष्ठा । पूजाच । ततश्चरुद्वयेश्रृताभिधारणा द्याज्यभागांतंप्राक्तं । ततस्तंभद्वयरोपणशिक्यबंधनादिद्वयोरहतवस्त्रधारणांतंपूर्ववत् । ततोऽभिषेकार्थंनक्षत्रदेवतायाः पूजारुद्रजपकुंभेरुद्रस्यपूजनं । पुनःकुंभंकुशादिनास्पृष्ट्वामृत्युंजयमंत्रस्यजपः । ततोऽभिषेकार्थंप्रार्थयेत् । मृत्युंजयमहादेवत्रा हिमांशरणागतं । अश्लेषारुक्षजातस्यशिशोर्दोषोपशांतये । आज्ञांदेहिमहादेवअभिषेकायशंकरं । एवंसंप्रार्थ्यपश्चाद्ग्नेरु पविशतः । अभिषेकेपूर्वोक्ताएवमंत्राः । विभिश्चविशेषोयथा । अश्लेषारुक्षजातस्यमातापितृर्द्धनस्यच । भ्रातृज्ञातिकुल स्थानांदोषंसर्वंव्यपोहतु । योसौवज्रधरोदेवोमहेंद्रोगजवाहनः । सार्पजातशिशोर्दोषंमातापित्रोर्व्यपोहतु । एवमग्रेपिन क्षत्रपदमूह्यविधेयं । ततआज्यावेक्षणाद्यंगस्पर्शांतंपूर्ववत् । होमेविशेषः । प्रथमेनसर्पसाम्नाप्रथमाहुतिः । द्वितीयेनसाम्ना

द्वितीयां। तृतीयेनतृतीया। वीहायवायि। इतिसाम्नाचतुर्थी। इदंसर्पेभ्योनममेतित्यागसर्वत्र। एताश्चतस्त्रश्चर्वाहुतयः। ततआदित्यादिग्रहाणांचरुहोमः। ततआज्याहुतयः। सर्पायस्वाहा। इदंसर्पायनमम। प्रसर्पायस्वाहा। इदंप्रसर्पायनमम। महासर्पायस्वाहा। इदंमहासर्पाय० ततोयांसंधामितिमंत्रेणअष्टावाज्यहूतयः। इदंसर्पेभ्योनममेतित्यागः। बृहस्पतेपरिदीयाइतिमंत्रेणाष्टौ। इदंबृहस्पतयेनमम। एतपितरइत्यष्टौ। इदंपितृभ्योनमम। पूर्वोक्तमंत्रैःपंचदशाज्याहुतयः। ततो ग्रहाणांमंत्रैराज्याहुतयः। ततःसमित्तिलादिभिर्होमः। ततोमृत्युंजयमंत्रेणदूर्वाहोमः। यांसंधांमितिमंत्रैणतिलाहुतयः। अष्टोत्तरसहस्रंशतंवा। अधिप्रत्यधिदेवयोर्मंत्राभ्यांतिलादिभिर्होमः। होमंपरिसमाप्यपूजाकार्या। संपूज्यप्रार्थयेत्। सर्पाधीशनमस्तुभ्यंनागानांचगणाधिप। ग्रहाणार्घमयाद्दत्तंसर्वारिष्टंप्रशांतये। इत्यर्घमंत्रः। ततःप्रायश्चित्तहोमः। उभयोश्चरुशेषेणस्विष्टकृत्। ततःपूर्णाहुतिः। ग्रहकलशोदकैरभिषेकः। दक्षिणा। सुसंप्रोक्षितमित्यादि। अस्यअश्लेषानक्षत्रजातशांतिकर्मणःसांगतासिध्यर्थं आचार्यायगांतुभ्यमित्यादि। ब्रह्मणेपूर्णपात्रं। ग्रहाणांस्वस्वदक्षिणा। होमसंकल्पः। अस्मिन्यज्ञेयरुत्विग्भिरित्यादिपूर्वोक्तमंत्रैः। ग्रहाणांनक्षत्रदेवतायाश्चविसर्जनमुत्तिष्ठन्निति। ततोबलिदानं। व्याहृतित्रयहोमः। समिद्धोमः। अनुपर्युक्षणंकुशमुष्टिहोमः। वसुभ्यःस्वाहांतेपंचामृतेनाभ्यक्तमूलहोमः। होममंत्राप्रागुक्ता एव। प्रदक्षिणागमनं। प्रणीतानिनयनं। पुनःपूरणं। ब्राह्मणभोजनसंकल्पः। अस्यअश्लेषाशांतिकर्मणःसांगतासिध्यर्थंअष्टोत्तरशत संख्याकान्चतुःपंचाशत्संख्याकान्वा अष्टाविंशतिसंख्याकान्वा ब्राह्मणान्भोजनेनाहंतर्पयिष्ये। भूयसीदक्षिणांनानागोत्रेभ्योइत्यादि। आशिषोनैगमाः। कुंभवस्त्रप्रतिमादिकमाचार्यायदद्यात्। सार्पनक्षत्रजातस्यशिशोर्दोषापनुत्तये। संप्रयच्छामितुभ्यंत्वसर्पामेप्रीयतांसदा। वस्त्रदानमंत्रः पूर्वोक्तएव। अत्रसंक्षेपेणोक्तं सर्वमूलनक्षत्रशांतिवदत्रापिज्ञेयं॥ ॥इत्यश्लेषाजात शांतिप्रयोगः॥ अथज्येष्ठाजातशांतिप्रयोगः॥ ॥तत्रसर्वमूलशांतिवत्। संकल्पेविशेषः। देशकालौसंकीर्त्यममास्यशिशोऽज्येष्ठानक्षत्रस्यांमुकांशेजातस्यरिष्टतज्जनितदोषक्षयकामः श्रीपरमेश्वरप्रीतयेसग्रहज्येष्ठानक्षत्र शांत्याअहंयक्ष्ये इतिसंकल्पः। जेष्ठानक्षत्रशांतिकर्मणोंगत्वेनविहित गौर्यादिचतुर्दशमातृणां





मित्यादि। वृद्धिश्राद्धेप्येवमेव। वरणांगप्रार्थनायांसग्रहांशाक्रशांतिंच कर्त्तुंयूयंप्रसीदतेत्यादि। सग्रहज्येष्ठानक्षत्रशांत्याहंयक्ष्येतत्रप्रहंमाचार्यंवृणे। एवसर्वत्र। इंद्रायत्वाजुष्टंनिर्वपामि इतिनिर्वपणे। पायसश्चरुःग्रहाणांयथावत्। होमस्थंडिलात्प्राच्यांनक्षत्रदेवतास्थापनं। ग्रहाणांयथास्थानं। देशकालौसंकीर्त्यअस्यशिशोज्येष्ठानक्षत्र जातदोषशांतयेनक्षत्रदेवतास्थापन पूजनमहंकरिष्ये इतिसंकल्प्य अष्टदलंविरच्यकर्णिकायांस्थापनं। इंद्राग्नेंद्रोमरुत्वतइतिमंत्रेण इंद्रंस्थापयामि। अनूराधर्क्षदैवतमधिदैवतंमित्रः। दक्षिणस्यांआनोमितावरुणेतिमित्रं। प्रत्यधिदैवतंनिर्ऋतिः। वेत्थाहीतिनिर्ऋतिंस्थापयामि। आवाहने। ॐभूर्भुवःस्वः भगवंतंपद्मासनंरक्तवर्णरक्तांबरावीतं रक्तमाल्यानुलेपनंद्विभुजंपद्माभयकरमित्रमावाहयामि। निर्ऋतेःस्वरूपंमुक्तंप्राक्। ततोवर्धन्यास्थापनं। कलशानांच। प्रतिष्ठा। पूजा। पूजामंत्रा। स्थापनप्रकरणोक्तएव। कलशेषुवरुणस्यपूजा। पूर्वकुंभेवारुणसूक्तस्यजप॥ आनोमित्रा। प्रमित्रायप्राहाउ। इतित्रीणि। यदाकदाइतित्रीणि। घृतवतीद्वेइतिवारुणानि। पूर्वकलशेएवरुद्राध्यायः। इंद्रसूक्तंइंद्रायेंदोइतिवर्गः। मृत्युंजयमंत्रस्यजपः। राक्षोघ्नानिदक्षिणे पश्चिमेचाप्रतीरथं। उत्तरेआरिष्टवर्गः। ततःश्रुताभिघारणाद्याज्यभागांतं। ततोऽभिषेकःपूर्ववत्। ज्येष्ठानक्षत्रजातस्यमातापित्रोर्धनस्यच। भ्रातृज्ञातिकुलस्थानांदोषंसर्वंव्यपोहतु। योसौवज्रधरोदेवोमहेंद्रोगजवाहनः। ज्येष्ठानक्षत्रजातस्यशिशोर्दोषंव्यपोहतु। एवमग्रेपि ततोआज्यावलोकनाद्यंगस्पर्शनांतंपूर्ववत्। ततोहोमः। इंद्रायस्वाहेतिचर्वाहुतिः। ग्रहाणांचरुहोमः। यतइंद्रभयामहेइतिमंत्रेणाज्याहुतयः। आनोमित्रा॥ वेत्थाहि। एताभ्यामाज्याहुतयोहोतव्याः। ततःपूर्वोक्तमंत्रैः पंचदशाज्याहुतयः। पालाशसमिधामष्टोत्तरशतंहोमः। ततस्तिलादिभिर्होमः। मृत्युंजयमंत्रेणदूर्वाहोमः। होमांतेपूजा। नमोस्तुसुरनाथायनमस्तुभ्यंशचीपते। गृहाणार्घमयादत्तंज्येष्ठादोषप्रशांतये। इत्यर्घमंत्रः। इंद्रःसुरपतिश्रेष्ठोवज्रहस्तोमहाबल। शतयज्ञाधिपोदेवस्तस्मैनित्यंनमोनमः। इतिनमस्कारः। ततःप्रायश्चित्तंहुत्वास्विष्टकृदुभयोः। पूर्णाहुतिः। ग्रहकलशोदकैरभिषेकः। दक्षिणा। ज्येष्ठानक्षत्रशांतिकर्मणःप्रतिष्ठासिध्यर्थंमाचार्यायगांतुभ्यमहमित्यादि एवमन्यत्रापिसंकल्पे। होमसंकल्पः। बलिदानं। समिधुत्वा

व्याहृतित्रयंजुहुयात् । अनुपर्युक्षणं । यज्ञवास्तु । वसुभ्यस्वाहांते । मूलानिजुहुयात् । प्रदक्षिणागमनादि । अस्य ज्येष्ठानक्षत्रशांतिकर्मणः प्रतिष्ठा सिध्यर्थंब्राह्मणानहंभोजयिष्ये । ज्येष्ठानक्षत्रजातस्यशिशोर्दोषापनुत्तये । संप्रयच्छामितुभ्यंचइंद्रोमेप्रीयतांसदा । अन्यत्सर्वंप्राग्वत् ॥ ॥ इतिज्येष्ठानक्षत्रजातःशांतिप्रयोगः ॥ ॥ अतःपरमग्रेतनशांतिनां प्रयोगोनिर्णयानुसारेणज्ञेयः । विस्तरभयान्नोच्यते । सर्वत्रशांतिषुप्रकृतिवत्विकृतिन्यायात्ग्रहशांतिवत्सर्वत्रकर्मक्रमो वेदितव्यः । मूलादिनक्षत्रशांतीषुपूर्णाहुति होमोनभवतीतिकेचिदाहुः । तदसत् । आकरग्रंथेष्वनुपदेशात् ॥ ॥ इति विद्वन्मुकुटमाणिक्यनीराजितचरणकमलशुक्ल श्रीविश्रामात्मज शिवरामविरचितेशांतिचिंतामणौशांतिप्रयोगःसमाप्तः ॥





रावल रणछोडलाल सांकलेश्वर स्थापित श्रीवेद गीर्वाण पाठशाळा तरफथी
छपाई बहार पडेलां सामवेदना पुस्तको—

| | |
|---|---|
| गोभिल गृह्यसूत्रम् | सामवेद ग्रहशांति |
| श्राद्ध चिंतामणी | छपाशे. |
| शांन्तिचिंतामणी | रुद्रचिंतामणी |
| सामवेद मंत्रसहिता | अथर्ववेदनो प्रयोगभानु. |
| छपाय छे. | |

उपरोक्त छपाई बहार पडेलां पुस्तको सामवेदी अभ्यास करनारने अथवा कर्मकांड करनारने विना मूल्ये आपवामां आवशे.

